

## मुखबन्धः।

कतिपय-वत्सरान् यावत् कलिकाता-विश्व-विद्यालये संस्कृतमपि द्वितीय-भाषास्थाने प्रवर्त्तितम्; अतः सर्वेष्वेव विद्यालयेषु विश्वविद्यालय-परीक्षा-प्रदानार्थि-समन्वितेषु कतिचित् संस्कृत-ग्रन्था इदानीमध्याप्यन्ते। सर्वास्वेव भाषासु अन्तःप्रवेशलाभमभिलषतां, तत्तद्भाषिक-गद्य-रचितेषु सरलेषु केषुचिदुपाख्यान-पुस्तकेषु स्वयमेवाऽनुशीलनं प्रतिभाति नितान्तमावश्यकत्वेन। संस्कृते च तादृशा गद्य-ग्रन्था अतीव विरलाः। ये तु पञ्चतन्त्र-हितोपदेशादयो विद्यन्ते, ते चांशत ऋजुपाठेष्वन्तर्निविष्टतया अध्यापक-सकाश एव पठिता भवन्ति; ये च कादम्बरी-दशकुमार-वासवदत्ताप्रभृतयः सन्ति—तेषां रचना प्रगाढ़ा, दुरूहा, वर्त्तमान विश्वविद्यालयच्छात्राणामनेकेषां दुरधिगम्या च; अतः विश्वविद्यालय-परीक्षा-प्रदानार्थिनो विनाऽपि परस्य साहाय्येन स्वयमेवाऽध्येतुं शक्ष्यन्तीत्यभिप्रेत्य महाभारतीयं प्रथितमेव

नलोपाख्यानं गद्येन मया परिवर्त्तितम्—प्रकाशितञ्चेदं 'दमयन्ती' नामधेयेन; यद्येतत्-पाठेन स्वल्पोऽप्युपकारलाभो भवेदध्येतॄणां तदैव कृतार्थतां लभेयम्।

भ्रमप्रमादादिजास्तु दोषाः संशोधनीयाः सुधीभिर्विनयाञ्जलियाचितैरित्यलम्।

बहरमपुरविद्यालयम्
माघस्य १३ शम् दिन
संवत् १९२५।

श्रीरामगति शर्म्मणा।

# शुद्धिपत्रम् ।

| पृष्ठा | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३ | ७ | मुष्णान्ती | मुष्णाती |
| १३ | ११ | अनन्तनं | अनन्तरं |
| ३६ | ३ | भल्लंका | भल्लूका |
| ३७ | ५ | सप्यस्व | मप्यस्व |
| ३७ | ५ | नाम्संहस्र | नाम् ; सहस्र |
| ३८ | ६ | द्रच्यामि | द्रच्यामि |
| ३८ | १५ | अमुस्मिन् | अमुष्मिन् |
| ३९ | १६ | निन्नधेषु | निषधेषु |
| ३९ | १७ | र्य्यार्वीर | र्य्यावीर |
| ३९ | २१ | हृत | ह्वृत |
| ४६ | २१ | जगामः | जगाम |
| ४७ | १४ | मार्त्तंगड | मार्त्तण्डे |
| ५० | ३ | दिवस्त्रतः | दिवस्त्रातः |

## मुखबन्धे

| | | | |
|---|---|---|---|
| १ | १७ | महभार | महाभार |
| २ | ४ | लभेयम् | लभेय । |

# दमयन्ती।

## प्रथमोऽध्यायः।

यद्भयादनिलो वाति वारिवाहः प्रवर्षति ।
सूर्य्यस्तपति वह्निश्च ज्वलतीशं नमामि तम् ॥

आसीत् पुरा निषधेषु सत्य-धर्म्म-परायणः परम-रूपवानऽस्त्र-शास्त्र-कुशलो वेदविहित-क्रिया-परः अतीव शूरः, सुरपतिरिव देवानाम् आदित्य इव तेजस्विनां मानवानामग्रगणनीयः सर्व्वगुणालङ्कृतो वीरसेनसुतो राजा नलो नाम। आसीच्च तस्मिन्नेव समये विदर्भेषु तथैव रूपौदार्य्यसर्व्वगुणाद्युपेतो भीमपराक्रमो भीमाभिधेयो नरपतिः। सचाऽप्रजाः प्रजार्थं सुसमाहितः सर्व्वदैव परं यत्नमकरोत्। तमेकदा दमनो नाम दीप्ततेजा ब्रह्मर्षि-रभ्यागच्छत्; अतिथिसेवाविधिज्ञश्च राजा प्रजा-

कामनया महिष्या सह तमत्यर्थं तोषयामास। तोषितश्च ब्रह्मर्षि स्तस्मै वरं ददौ ; तद्वरेण राज्ञो दमयन्तीनाम्नी दुहिता, दम-दान्त-दमननामान: सर्व्व-गुणसम्पन्ना स्तनयाश्च त्रयो जज्ञिरे ।

दमयन्ती तु सितपक्षीया शशिकलेव दिने दिने परिवर्द्धमाना रूपेण गुणेन च लोकेषु परां ख्याति-मवाप ; क्रमशो यौवनपदवीमवतीर्णा च दीर्घकेशी विशालनयना सुमध्यमा सर्वावयवाऽनवद्या सर्वाभ-रण-भूषिता पृथिव्यां ललना-जन-ललाम-भूता बभूव ; न देवेषु न गन्धर्वेषु न यक्षेषु न चोरगेषु—कैव कथा मानुषेषु—समदृश्यत काचिदङ्गना तादृग-तीवरूपसम्पन्ना । किम्बहुना तथाऽनुपमरूप-लावण्यतया दिवौकसामपि मानसान्याचकर्ष सा सुन्दरी वसुधातलस्था ।

निषधाधिपति र्नलश्च मनसिज इव मूर्त्तिमान् रूपेण जगत्यामप्रतिमो बभूव । अथ तस्य रूपं शीलं शौर्य्यं विद्याञ्च सततमितस्तत: कथयतो जन-व्रजादुपश्रुत्य मानसमभूद् भैम्या स्तस्मिन्नतीवानु-षक्तम् । नलोऽपि तां सर्वथाऽऽत्मनोऽनुरूप-रूप-गुण-शालिनीमाकर्ण्य मनसा तामेव कृतवान् हृदयेश्वरीं ।

एवमन्योन्य मदृष्टयो रप्यनुरागे बद्धाङ्कुरे, एकदा तु निषधेश्वरो रहसि दमयन्ती-चिन्तया-ऽऽत्मानं विनोदयितुकामः शुद्धान्त-समीप-गं रमणीय मुद्यानं प्रविवेश। तत्र स जातरूप परिष्कृतान् विचरतो हंसानऽवलोक्य कौतुकाऽऽकुलित-हृदयः करेणैकं जग्राह। स तु गृहीतमात्रो हेम-विहङ्गमो मानुषवाचा विस्माययन् आरभताभिधातुम्—"राजन्! मावधी मां—प्रियं ते करिष्यामि। अहं लोक-लोचन-चन्द्रिकाया विदर्भ-राज-तनूजाया दमयन्त्याः सकाशे त्वां तथा वर्णयिष्ये, यथा सा त्वदन्यं पुरुषं चक्षुषाऽपि नालोकयिष्यतीति" राजा तमुत्ससर्ज। अथ ते समुत्पत्य विहङ्गमा विदर्भं पर्य्यगच्छन् निपेतुश्च विदर्भनगरीं प्राप्य अन्तिके दमयन्त्याः।

सा तु प्रमद-वन-स्था राज-बाला सखी-गण-संवृता चामीकर-चारूनऽवलोक्य तान् विचित्र-विहगान् समुत्पन्न-कुतूहला ग्रहीतुं ग्रहमकरोत्। हंसास्तु कन्याभि स्ताभि रेकैकशः समनुद्रुता उत्प्लुत्योत्प्लुत्य प्रमद-वन-मध्ये सर्वतः परिक्रमितुमारेभिरे। यन्तु दमयन्ती समुपाधावत् स च क्रमेण गत्वा निर्म्मक्षिकं स्थानं मानुषी मवलम्ब्य गिरं दमयन्तीं

व्याजहार "राजपुत्रि ! विमुच्यतां मद्ग्रहण-प्रयासः श्रूयताञ्च यत् त्वामभिदधामि—अस्ति निषधेषु नलाभिधेयो नरपतिः—स च रूपेण कलङ्क-रहितः कलाधर इव, बुद्ध्या बृहस्पतिरिव, विक्रमेण च सुर-पतिरिव राजते ; न सन्ति मानवाः पृथिव्यां तस्य समाः, अतो यदि तस्य भार्य्या भवेः, तदा भवति सफलं ते रूपमिद मलौकिकं—जन्म च ; वयं हि नानादेशान् परिभ्रमन्तो दृष्टवन्तो देव-गन्धर्व्व-मनुष्योरगान् बहूनेव, न तु कदापि कुत्रापि लोके तादृशं पुरुषं ; त्वं हि नारीणां रत्नं, सोऽपि पुरु-षेषु ; अतो योगइव मणि-काञ्चनयोः भवतु युवयोः समागमः सर्व्वेषां सुखाय" एवमुक्ता तु मरालेन 'ममापि वृत्तान्तं कथय नलाय' इत्यादिदेश तं मरालगामिनी। सोऽपि पुनरागम्य निषधं सर्व्वं नलाय निवेदयामास।

---

## द्वितीयोऽध्यायः।



श्रुत्वा तु सर्वमुदन्त मुदक-चर-मुखा दुच्छलितं नृपति-बालायाः सुख-सागरेण। सा तु तदारभ्य

कथं तं पश्येयं! कदा तद्वचन माकर्णयेयं! केनोपाये नास्मै शरीरं समर्पयेयं! अपि स मां गृह्णीयात्! अप्यहं तदर्थ मिव सोऽपि मदर्थमुन्मना भवेत्! एवम्भूतै रन्यैश्च वासना-सहस्रै रहर्निशं यापित-वती; अनवरत-तच्चिन्ता परतया च प्रजागर-कृशा क्षामेक्षणा क्षामदेहा च नाऽऽहारविहारेष्वपि स-मध्यगच्छत् कामपि रतिं; क्रमशो विवर्ण-वदना मुन्मत्त दर्शनाञ्च मोहोऽपि कदाचिदाक्रान्तवान् राजनन्दिनीम्।

अथता मसुस्था मीदृशाकाराञ्च विलोक्य सखी-गणो न्यवेदय दिङ्गिते विदर्भाधिपतये। राजा तु श्रुत्वा, कथं ईदृगसुस्था मे तनूजा जाता? रोगो मनस्तापो वा—किमस्य कारणं भवेत्? कथ-मेतत् प्रतिकुर्य्यां? इत्यादि बहुधा विचिन्तयन्, अनुस्मृत्य दुहितु रधिगतयौवनत्वं स्वयंवरार्थं यत्न-मकरोत्, निमन्त्रयामास च नाना-दिगन्त वास्तव्यान् प्रथितान्वय-सम्भवान् अनेकानऽवनीभुजान् विदर्भा-गमनाय। ते तु विश्रुत-रूप-गुणाया रमणी-रत्न भू-ताया दमयन्त्याः स्वयंवर माकर्ण्य त्वरमाण-हृदयाः सत्वर मेव हस्त्यश्व-रथ-निवहैन च्छादयन्तो वर्त्मानि विदर्भ मुपगन्तु मारेभिरे। भीमोऽपि व्यय-मुक्त-

हस्तो विधाय तेषां यथायथ मर्हणां न्यवेशयत् तान् पराद्धर्योपकरण-सम्भृतेषु रमणीयेषु गृहेषु।

एतस्मिन्नेव समये देवर्षी, नारदः पर्व्वतश्च, यदृच्छया पर्य्यटन्तौ जग्मतु र्भूलोकात् देवराज-भवनम्। महेन्द्रस्तु विधिवत् संपूज्य तौ महाव्रतौ तयो र्भुवनस्य चाऽनामयं पृष्टवान्, प्रत्युक्तश्च नारदेन; त्रिदिवनाथ! अवगच्छाऽऽवयोः सर्व्वतो वार्त्तं, धरणीश्वरांश्च धरायां कुशलिनो जानीहीति। पुनरपि तं शक्रः पृष्टवान् देवर्षे! ये हि महौजसो मानधनाः पृथिवीपाला विगृह्य धर्म्मेण युद्धेनाऽपराङ्मुखाः शस्त्र-मुखाऽऽहुत-जीविता भवन्ति, प्राप्नुवन्ति ते मदीयेऽस्मिन् भवने सादर मातिथ्यं, भवति चायं लोकस्तेषा मक्षयाय— क्व गता इदानीं ते शूराः क्षत्रियाः? कथन्नु न पश्यामि तानत्राऽऽगच्छतो मे प्रियातिथीन्? "आकर्ण्यतां मघवन्" उवाच नारदः "येन कारणेन महीक्षितोऽत्र न दृश्यन्ते;—विदर्भाधिपते र्भीमस्य दुहिता दमयन्तीति विश्रूयते, सा तु रूपेण सर्व्वाः सीमन्तिनीः पृथिव्या मतिशयितवती। तस्याः स्वयंवरः सम्प्रति भविता, तत्रैव सर्व्वे राजानो राजपुत्राश्च विस्मृत-सर्व्व-कार्य्याः काम-

यून्त स्तामेव रमणीरत्नभूतां गच्छन्ति, अतो न विद्यते लोकेषु समरस्य वार्त्ताऽपीति"। एतस्मिन्नेव कथ्यमाने वह्निपुरोगमा लोकपाला स्तत्रैवाजग्मुः, शुश्रुवुश्च नारदमुखात् दमयन्ती-गतं सर्वं वृत्तान्तं, हृष्टुश्च सर्वेऽपि परम-प्रहृष्टाः स्वयंवर-गमनाय, चेलुश्च तत्क्षणमेव सगणाः सवाहनाश्च विदर्भाभिमुखम् ।

अथ गच्छन्तस्ते विमानेन, मूर्त्तिमन्तं मन्मथमिव तेजसा भ्राजमानं ददृशुः स्वयंवरार्थमेव चलितं भूतले नलं राजानं। तस्य रूपसम्पद मवेक्ष्य विस्मिता विहत-दमयन्ती-लाभाशाश्च विष्टंभ्य विमानान्यन्तरीक्षे, अवतीर्य्य च नभस्तलादाचख्युः "भो भो निषधराजेन्द्र नरोत्तम नल! विधेहि किञ्चिदस्माकं साहाय्यं, परिगृहाण दौत्यं कस्मैचित् कार्य्यायेति" स तु श्रुत्वैव "करिष्ये" इति प्रतिज्ञाय कृताञ्जलिरभ्युपेत्य पृष्टवान्—"कान् पुनरत्रभवतोऽवगच्छामि? को मां दौत्यार्थं नियोजयति? किंवा कर्त्तव्यं मयेति। प्रत्युवाच मघवा—दमयन्त्यर्थं गच्छतोऽस्मानऽमरानऽवेहि—अहमिन्द्रः, अयमग्निः, एष यमः, असौ च वरुणः। त्वन्तु दमयन्तीसकाशं गत्वा कथय यन्महेन्द्राद्या लोक-

पाला: स्वयंवरदिदृक्षव: सभां यान्ति, प्राप्तुमभिलषन्ति च त्वाममरगर्भाभां। यस्तेषां तुभ्यं रोचते, तस्मै एवाऽस्माकमन्यतमस्मै पतित्वे वरयस्वेति। स तूद्भ्रान्तइव प्राञ्जलिरब्रवीत् भगवन्! अमुमेवार्थमुद्दिश्य प्रयान्तं मां नैवं वक्तुमर्हति; कोहि पुमान् मनोरथप्रियां शक्नोति परार्थमीदृशमभिधातुं? तत् क्षमध्वं ममामरा:! अन्यं कमपि कार्य्येऽस्मिन् नियोजयत, एष व: शिरसाऽञ्जलिरिति। देवा ऊचु:—राजन 'करिष्ये' इति प्रथमं प्रतिश्रुत्य नैवं वक्तुमर्हसि—त्वं हि लोकै: सत्यव्रत इति गीयसे। स तु व्रीड़ित इव तथेति स्वीचकार अब्रवीच्च देवेश! कन्यान्त:पुरवेश्मानि अवश्यं सुरक्षितानि भविष्यन्ति, कथमहं तत्र प्रवेक्ष्यामि?—मद्वरेणाऽवारित: प्रवेक्ष्यसीति शक्रस्तं प्रतिजगाद।

अथ मनुजेश्वर: प्रणम्य तान् सुरेश्वरान् चचाल भीमनरेन्द्रभवनं, प्राविशत् कन्यान्त:पुरं, व्यलोकयच्च तत्र अनवद्यसर्वाङ्गसुन्दरीं सर्वालङ्कारशोभितां सखी-गण-समावृतां राजनन्दिनीं दमयन्तीं। दृष्ट्वैव तां लावण्य-सागर-सन्तारिणी मतिमात्रमुन्मना बभूव राजपुत्र:, न्यवारयच्च वशित्वाद् दौत्यभङ्गभयाच्च आत्मनो मानस-विकारम्।

अथ ता अदृष्ट-पूर्व-पुरुष-वर-सन्दर्शनेन सम्भ्रान्ता वराङ्गनाः सहसा समुत्तस्थुरासनेभ्यः, चिन्तयामासुश्च मनसि—अहो पुरुषरत्नस्य रूपं। अहो लावण्यं! अहो गाम्भीर्य्यं!—कोऽयं भवेत्! देवः—यक्षः—गन्धर्वो वेति; न तु लज्जावत्यः तस्य रूपेणाऽलौकिकेन धर्षिताश्च शक्नुवन्ति स्म किञ्चन व्याहर्त्तुं। अथ तासां दमयन्ती लज्जा-सम्भ्रमविधुराऽपि, समुचितं गृह-समागत-जनस्य सम्भाषणमिति गद्गद-कण्ठ-स्वरम् आरभत प्रष्टुं कोकिलकलभाषिणी; कस्त्वमसि वीर? कथमागतोऽसि मद्भवनम्? केन वा कारणेन लक्षितोऽसि नान्यैः? सुरक्षितं हि मदीयं प्रकोष्ठं, राजाचोग्रशासन इति। स त्वेवमुक्तो वैदर्भ्या प्रत्युवाच, विद्धि मां राजनन्दिनि! नलं निषधाधिपतिं देवदूतं त्वदर्थमुपेतं; शक्रोऽग्निर्वरुणो यमश्च देवा स्त्वां प्राप्तमिच्छन्ति, वरय तेषामन्यतमं सुन्दरि भर्त्तारं, तेषामेव प्रभावेण न लक्षितोऽहं प्रविशन्, केनापि न निवारितश्च, त्वमिदमिदानीं यथारुचि कुरुष्वेति।

दमयन्ती तु पूर्वमेव मराल-मुखादाकर्णनदिनादारभ्य नल एव प्रगाढ़मनुरक्ता आसीत्; इदा-

नोन्तु तं सर्वाकार-मनोरमं नलं प्रत्यचीकृत्य हर्ष-निर्भर-मन्थरा पुलकित-सर्व-काया चरितार्थां नयन-युगलस्य जन्मनस्त्वात्मनः साफल्यं मेने ; उद्भ्रान्त-हृदया वेपमाना च देवानाम्प्रार्थनया, नमस्कृत्य तान् मानसेनैव, विसृज्य च समुचितां शालीनतां प्राक्रामत वक्तुं—राजन् निषधेश्वर ! यदैव हंसमुखा-दाकर्णितं, ततः प्रभृत्येव त्वय्येव मया सर्वं सम-र्पितं ; मम शरीरं मानसं धनं यच्चान्यद्वा विद्यते, तत् सर्वमेवाधुना त्वदधीनं जानीहि ; त्वद्वाप्तिलो-भाऽनलेनाऽहं कोट्टशमन्तर्दह्ये तज्जानात्यन्तर्यामी भगवानेव ; त्वत्कृते हि मया स्वयंवराऽपदेशेन राजानः सन्निधापिताः ; किम्बहुना यदि त्वमित्थं भजमानां मां प्रत्याख्यास्यसि तदा विषं अग्निं जलं रज्जुं वाऽवश्यमेव अवलम्बिष्ये, एष हि मे स्थिरो निश्चय इति। स तां प्रत्युवाच—विपरीतमेतत् राजपुत्रि ! यतो महेन्द्र-प्रभृतीनऽवमन्य दिगीशान् मानुषं पतिं मिच्छसि ! अतो निवर्त्ततामस्माद्-दुरध्यवसायात्, प्रवर्त्तताञ्च मतिस्ते महात्मसु लो-कपालेषु, येषां चरणरजसाऽपि तुल्यो नाहं। मृत्यु-मिच्छति हि मर्त्यो विप्रियमाचरन्नमर्त्यानां, अत-स्त्रायस्व भामिनि ! मामात्मानञ्च सुरकोपात्,

वृणीष्व तेषामन्यतमम्, अनुभव च वासांसि विरजांसि, माला अम्लान-कुसुमाः, भूषणानि च कल्पतरु-प्रसूतानि तेषां प्रसादेन। यस्यैव दण्डभयाद्भीताः सर्वएव जीवाः स्वं स्वं धर्म्ममनुवर्त्तन्ते का तं कृतान्तं स्वामिनं नाभिलषेत्? योहि सङ्कल्प-मात्रेण सर्वान् सरित्सागरादीन् शोषयेद् वर्द्धयेद्वा का तं यादःपतिं पतिं न वरयेत्? यः खलु स्थित स्थावरजङ्गमात्मकं समस्तमेव विश्वं क्षणेनैव भस्मीकुर्य्यात्, का तं कृष्णवर्त्मानं भर्त्तारं नेच्छेत्? यस्य हि देवानपि सर्वानाज्ञां वाहयति, का वा तं शचीपतिं पतित्वेन नाङ्गीकुर्य्यात्?

इत्येवमुक्ता नैषधेन "पृथिवीनाथ! अहं नमस्कृत्य सर्व्वेभ्यो देवेभ्यः त्वामेव भर्त्तारं वृणे" इति सनिर्बन्धमालपन्तीं वाष्पाविल-नयनां वेपमानां पुनरप्युवाच राजा दमयन्तीं—किमहं करवाणि कृशोदरि! कथमहं दौत्येनागत्य विहत्य नियोक्तृणामर्थं, स्वार्थं साधयेयं? एवं स्वार्थसाधनेन देवेष्वपराधः महानऽधर्म्मश्च मे सम्पद्यते। तद् यद्येवं कश्चिदुपायः समुद्भाव्येत यत् तादृश-स्वार्थाऽऽचरणेनाऽप्यधर्म्मो न मां कलयितुं शक्नुयात्, तदा शक्नोमि त्वन्मतमनुमोदितुं। अथ सा साश्रुनयना

विचिन्त्य क्षणमेकं पुनरपि तं कृताञ्जलिरब्रवीत्, नरनाथ! चिन्तितो मया कश्चिदुपायः, श्रूयतां युक्तो न वेति—भवान् देवाश्च महेन्द्रादयः सहिता एव सर्वे स्वयंवरभूमिमायान्तु, तत्राहं लोकपालानां सन्निधावेव भवन्तमेव वरिष्ये—नेत्थं भवतो भविता कश्चन दोष इति। श्रुत्वैवं नलः प्रहृष्टः प्रतिश्रुत्य च तथेति, प्रत्याजगाम तत्र, यत्र देवास्तं प्रतीक्षन्तेस्म; पृष्टश्च तेभ्यो निवेद्य सर्वमन्तःपुरगमन-पराऽदर्शन-दमयन्तीसंलापादिकं सविस्तरं वृत्तान्तं "प्रमाणमिदानीमत्रभवन्तः" इति प्रणम्य विरराम, सहिताश्च सर्वे विदर्भनगरमाजग्मुः।

## तृतीयोऽध्यायः

अथ शुभे काले पवित्रे च मुहूर्त्ते आजुहाव राजा भीमः समागतान् भूपालान् स्वयंवराय। ते तु त्वरितास्तत्क्षणमेव दमयन्ती-दर्शन-लालसाः समुत्सुक-मानसाः सुरायुध-सदृश-तोरण-रुचिरं

कनकमय-स्तम्भ-राजि-राजितं उपरि विन्यस्त-विचित्र-चन्द्रातपं लोहित-यवनिका-पिहित-प्रान्तं श्रेणीबद्ध-मनोरमासन-शोभित-सङ्ख्यातीत-राजमञ्चं प्रविष्टवन्तो रङ्गम्; उपविविशुश्च यथायथमासनेषु सुसंस्कृत-केश-जालाः सुरभि-माल्य-धारिणः स्वच्छा-म्बर-परिहिता रत्नालङ्कार-भूषिताः। अथ विहित-स्वयम्बर-वेशा दमयन्ती, मुष्णन्ती प्रभया तेषां नेत्राणि चित्तानि च सभातलमाजगाम गजेन्द्र-गामिनी। येष्वेवावयवेषु तस्याः पतिता राज्ञां दृष्टिः तत्रैव लग्नाऽभूत् न चान्यतश्चचाल।

अनन्तरं कयाचित् प्रगल्भया प्रतीहार्य्या कीर्त्त्यमानेषु राज्ञां कुल-शील-नामधेयादिषु "मामेव वरिष्यते—मामेव वरिष्यते" इत्यारूढ़सङ्कल्पाकुलित-चित्तेषु भूपालेषु राजनन्दिनी हताशता-मलिन-वदनान् अतिक्रम्य बहुशो राजनन्दनान् ददर्श कुत्र-चित्, सलिल-तरङ्गेषु प्रतिविम्बित-शशधरानिव नलाकृतीन् निर्विशेष-रूपान् पञ्चपुरुषान्। समीक्ष्य तु तान् एकरूपान् एकवेशांश्च नाभिज्ञातवती वैदर्भी कतमस्तेषां निषधराज इति। यं यमेव सा निरी-क्षते स्म, तं तमेव नलं मेने; वृद्धेभ्यो यानि तु देव-लिङ्गानि श्रुतान्यासन्, तान्यऽपि केषुचिदपि तेषु

भूमावस्थितेषु न लक्षितवती भैमी। अथ सा भय-वेपमानाङ्गी विचिन्त्य चिरं, विचार्य्य च बहुधा, देवानेव शरणं आपद्यमाना, नमस्कृत्य च तान् कायेन वाचा मनसा च भक्तिनम्रमूर्त्तिः कृताञ्जलिः वाष्पगद्गदमुवाच "भो भो भगवन्तो देवाः सर्व्व-भूतान्तर्यामिनः! यदि हंस-वचन-श्रवण-दिनादा-रभ्य नल एव मया सर्व्वात्मना पतित्वे वृतः; यदि कायेन मनसा वाचा वा कदाचिदपि निषधराजे नाहं व्यभिचरितवती; यदि नलाराधनाय विविध-नियम-कर्षिताङ्गी एतावन्तं कालं अतिक्लेशेन या-पितवती; यदि च स एव मे विधातृ-विहितो भर्त्ता भवेत्, ततः अनुगृह्णन्तु मां भवन्तः—स्वीकुर्व्वन्तु स्वानि रूपाणि—अभिज्ञापयन्तु च मां तं पुण्य-श्लोकं निषधराजम्। देवास्तु निशम्य सरलायाः तत् करुणं परिदेवितं राजबालायाः, बुद्ध्वा च तस्या मनोविशुद्धिं भक्तिञ्चाऽकृत्रिमां निषधराजे, यथा-प्रार्थितं परिगृहीतवन्तः स्वं स्वं रूपम्। अथ सा सविस्मयं अमृत-वर्त्ति-विशोधित-नयनेव नयनमुन्मी-लयन्ती स्वेद-लेश-रहितान् अनिमिष-लोचनान् रजो-हीनान् अम्लान-माला-धरान् क्षितिमस्पृष्ट्वैव अवस्थितान् छाया-हीनान् देवानपश्यत्—अपश्यच्च

तत्रैव खिन्न-गात्रं रजो-रुषितं सनिमेष-लोचनं भूमिष्ठं शिथिल-स्रग्धरं छाया--द्वितीयञ्च नैषधं। अभिज्ञायैव तं पुण्यश्लोकं हर्ष-भर-विस्रस्ताङ्गी लज्जा-मधुर-मूर्त्तिर्वरवर्णिनी वसनान्ते तं जग्राह, समर्पयामास च स्कन्धदेशेऽस्य मङ्गलां स्वयम्बरमालाम्।

अथ सर्वतः सभां सहसा मुक्तो हाहेति शब्दः भग्न-मनोरथैर्महीपालैः, साधु साध्विति च रवो योग्य-समागम-प्रीतैर्देवैर्महर्षिभिश्च। ततः प्रहर्ष-पुलकित-गात्रः प्रीति-विस्फारित-नेत्रो वीरसेनिः सवाष्प-गद्गदमुवाच दमयन्तीं, "वरारोहे! यत् त्वं देवानामपि सन्निधौ मामेव एकाग्रेण मनसा वरितवती भर्त्तारं, अतः शुचिस्मिते! यावन्मे देहे प्राणा धरिष्यन्ति, तावदेवाऽहं तवानुचरः त्वत्सुख-दुःखैक-सुख-दुःखः त्वदेकायत्त-जीवितश्च भविष्यामि इति सत्यं सत्यमेव खलु ब्रवीमि"। अथ तौ वाञ्छित-समागमात् परस्परमतीव प्रीतौ समीक्ष्य पुरतो वह्निपुरोगमान् लोकपालान् मनसा तानेव शरणं गतवन्तौ। तेऽपि प्रहृष्ट-मनसो महौजसः भैमी-हृताय नैषधाय दत्तवन्तो वरानष्टौ—शक्रोऽस्य यज्ञेषु आत्मनः प्रत्यक्षदर्शनं अन्ते चास्मै शोभनां गतिं—अग्निः, यत्रैव नैषधो वाञ्छिष्यति तत्रैवाऽऽत्म-

भवं आत्मप्रभांश्च लोकान्—यमः, नल-पक्षेष्वऽन्नेषु परमं रसं धर्मे परानुरागञ्च, अपाम्पतिरपि नले-च्छया सर्वत्रैवाऽऽत्मभवं शोभन-गन्धाढ्याः स्रजश्च परमया प्रीत्या दत्तवन्तः, गतवन्तश्च तयोः कृता-शिषः स्वेषु स्वेषु स्थानेषु त्रिदिवस्य ।

अथ पार्थिवा नानादिग्देशात् आगताः समीक्ष्य स्वयम्बर-महोत्सवं यथागतं प्रतिजग्मुः । गतेषु च तेषु भीमः परमं प्रीतो निर्वर्त्तयामास विवाहं अग्निसाक्षिकं दुहितुर्नैषधस्य च । ततो निषधेश्वरः यथाकाममुषित्वा परमोपचरितः कतिचिद्दिवसान् विदर्भेषु, प्रतिगतो भीमाऽनुमतः स्वकीयां राज-धानीम् । तत्र च पिता पुत्रानिव प्रजाः पालया-मास ; अश्वमेधेन अपरैश्चाध्वरै रीजे, विजहार च समाप्य राज-कार्य्याणि सर्वदैव वनेषु उपवनेषु च रमणीयेषु तया जीवित-तुल्यया । अथ कालेषु व्यतीतेषु प्रसूतवती राजमहिषी—सुतमेकं इन्द्रसेन-नामानं सुताञ्च इन्द्रसेनाभिधेयाम् । लालयन्तौ पालयन्तौ च तौ समवाप्त-सर्व-सुख-सारौ कति-चिद् वत्सरान् ऊषतुः परमया मुदा दम्पती ।

# चतुर्थोऽध्यायः।

वृते तु नले दमयन्त्या दिवं गच्छन्तो लोकपालाः पथि द्वापरेण सार्द्धमायान्तं कलिं ददृशुः, पप्रच्छुश्च कले! क्व यासि द्वापर-द्वितीयः? स तु प्रत्युवाच, दमयन्त्याः स्वयम्बरो भावीत्युपश्रुत्य तामेव वरयितुं तत्रैवाऽऽवां गच्छावः, मनो हि मे तस्यां अतीवाऽऽसक्तमिति। अथ विहस्य अब्रवीद् वृत्रहा कले! निर्वृत्तः स स्वयम्बरः, वृतस्तया निषधराजः पतिरस्मत्समीप एव। श्रुत्वैव कलिः कोपाकुलितः सर्वानेव तानऽमरान् आमन्त्र्य वचनमिदमुवाच पश्यन्तु भगवन्तो दुर्विनीताया निर्म्मर्य्यादतां! सत्सु इन्द्रादिष्वपि लोकपालेषु मानुषं पतिं माऽऽदत्तवती मन्दभागिनी! अहो तस्या देवताद्वेषः! अनेनैव दोषेण विपुलं दण्डमर्हति सा दुष्टमानुषी, किं वा भवन्तो मन्यन्त इति। एवमुक्तास्तु कलिना दिवौकसः प्रत्यूचुः कले! अस्माकं अनुमतावेव नलो गृहीतो दमयन्त्या, अतो न वयं तत्र मन्युं कर्त्तुमर्हामः—का वा कामिनी—देवी मानुषी वा तादृश-लोकोत्तर-रूप-गुणोपेतं विहाय नलं

राजान कामयेत अपरं कमपि ? नलो हि नि-
खिलानेव धर्म्मान् वेत्ति, चतुर एव वेदानऽधीते,
नित्यमेव यज्ञेषु हविर्भुजः प्रीणयति, सदा सत्यमेव
ब्रूते, न जातु कमपि हिनस्ति, ज्ञान-तपः-शौचा-
चारेन्द्रिय-संयमादिभिश्च संयुतो नित्यमेवाऽवति-
ष्ठते ; अतः को वा स्वहित-काम ईदृशं पुरुषप्रवरं
अकारणं शप्तुमुद्यच्छेत् ? यस्तु मूढ़स्तं शपेत्,
स आत्मनैव आत्मानं हन्यात्, किम्बहुना स नि-
पतेदेव निरये महाघोरे इति। एवमुक्त्वैव देवा
दिवं गतवन्तः। गतेषु च तेषु कलिः द्वापरमुवाच
द्वापर ! वचसाऽपि देवानां न शक्नोम्यहं नलोपरि
कोपं संहर्त्तुं, अतो भ्रंशयिष्यामि तं राज्यात्,
वियोजयिष्यामि च दमयन्त्या ; त्वमपि अचान्
समाविश्य विधेहि मे किञ्चित् साहायकमिति।

अथैवं विधाय समयं द्वापरेण सार्द्धं आज-
गाम कलिस्तत्र, यत्र राजा नैषधो बभूव। स च
नित्यमेव अस्याऽन्तरं प्रेप्सुः बहुदिनं अवसन्नि-
षधेषु प्राप्नोच्च तत् द्वादशे वर्षे। एकदा तु नलो
विधाय स्नावं अकृत्वैव पादयोः शौचं उपास्त सन्ध्यां,
आविशच्च कलिरेनं तेनैव च्छिद्रेण। स त्वेकरूपेण
तं समाविश्य गत्वा चान्यरूपेण पुष्करं नलभ्रातर

मुवाच—एहि पुष्कर! दीव्य अक्षैर्नलेन, विजित्य च द्यूते मत्प्रसादेन नलं, प्रतिपद्यस्व राज्यं हस्त्यश्व-धन-जन-रत्न-परिपूरितम्। असौ तु पुष्करः लोभ-भ्रान्त-चेता नलसमीपमगमत्, कलिश्च द्यूतवृषभा-कारः तयोरग्रत एव सञ्चचार। अथ पुष्करो नलं द्यूतार्थं मुहुर्मुहुराजुहाव—एहि नल! दीव्याव आवामक्षैः एतेनैव वृषेण पणेन—एहीति। स तु वारंवारमाहूयमानो दमयन्तीसमक्षं सोढुं न शेके, प्रावर्त्तत द्यूते हस्त्यश्वरथसुवर्णादिना पणेन, अजी-यत च कलि-समाविष्टः पुनःपुनरेव। एवं परा-जयेनैव अस्य द्यूतानुरागो ववृधे; का निशा किं दिवा का सन्ध्या सर्वदैव विस्मृत-सर्व-कार्य्यो दीव्यतिस्म अक्षैः। तदा तु तं तादृगक्ष मद-सम्मत्तं न कोऽपि सुहृदां शशाक निवारयितुम्।

अथ पुर-वासि-वर्गः सह सचिव-मुख्यैः आज-गाम राजभवनं राजानं द्रष्टुम्, गतचेतनञ्च तं द्यूतान्निवारयितुं। उपलभ्यैतत् सारथिः, उपगम्य वैदर्भीं निवेदयामास देवि! द्वारि तिष्ठन्ति प्रकृ-तयः अमृष्यमाणा राज्ञो व्यसनं, तन्निवेद्यतां नैषधायेति। अथ सा स्वामिहितार्थिनी भर्त्तृ-व्य-सनदर्शन-कर्षिता दुःख-भर-तिरोहित-मुख-प्रसादा

साश्रुनयना समुपेत्य नैषधं प्रोवाच वाचा वाष्प-भिन्न-स्वरया, राजन्! क्लेशं सहन्ते हि पौरजनाः द्वारि समवतिष्ठमानाः सामात्याः त्वद्दर्शनाय, अतो द्रष्टुमर्हसि तान् राजभक्तिपुरस्कृतानिति। स तु पुनःपुनरुक्तोऽप्येवं आविष्टः कलिना नाभ्य-भाषत किञ्चित् तां कोकिलकण्ठीं तथा विल-पन्तीम्। ततो मन्त्रिणः पुरवासिनश्च 'नाय-मिदानीं भवति' इति दुःखिता व्रीडिताश्च गत-वन्तः स्वानि निकेतनानि, चलितञ्च नलपुष्करयोः द्यूतमविच्छेदेन बहुदिनं यावत्, यत्र नलस्य सर्व-दैव पराजय आसीत्।

अथ दमयन्ती विलोक्य अनुदिन-हीयमान-चेतनं हृत-सर्वस्वञ्च नराधिपं, भयेन शोकेन चाकुला चिन्तयामास—किमिदमिदानीमापतितं मे जीवितेश्वरस्य! कथमयं न मां पूर्ववदभि-नन्दति? केन पापेनाऽसौ दुरोदरोन्माद एनमा-विष्टवान्? कथं तादृशधार्म्मिकोऽपि धर्म्मकार्य्यार्थ-मपि न चिन्तयति! अहोवताऽस्य शून्य-हृदयता! सर्वथा मामेव मन्दभागिनीं क्लेशयितुकामस्य विधेरेव विलसितमिदं इति प्रतिभाति। एवं बहुविलप्य विचार्य्य च बुद्ध्या वराङ्गना व्याजहार

परिचारिकां चिरमनुरक्तां हितार्थिनीं वृहत्सेनां नाम ; वृहत्सेने ! नलादेश इति सचिवान् कोष-ज्ञान् आनाय्य यावद्धनं हारितं यावच्चाऽवशिष्ट-मिति निरूप्य राज्ञे निवेदयितुमाचक्ष्वेति । ततो मन्त्रिणोऽपि तद्वचनात्, दिष्ट्या पुनरुदितमिदानीं राज्ञश्चैतन्यं, इति मन्यमानाः सानन्दाः त्वरितमेव राजभवनमाजग्मुः । भीमसुता च पुनरेव मन्त्रिणा-मागमनं राज्ञे निवेदितवती, स तु तत् श्रुत्वाऽपि न श्रुतवान् । तथा वाक्यमनभिनन्दन्तं वीक्ष्य भर्त्तारं शोकेन, अभिमानेन, व्रीड़या च विधुरा प्रविवेश गेहाभ्यन्तरं मानिनी, सचिवाश्च यथागृहं जग्मुः । यदा तु राज्ञी सततमेव अक्षान् पुण्य-श्लोक-प्रतिकूलान् अशृणोत्, यदा च नाथं हृत-सर्वस्वमपि प्रतिदिवसोपचीयमान-दुरोदरानुरागम् अपश्यत्, तदा सा परित्यक्त-सर्व-शुभाशा वार्ष्णेय-नामधेयं आप्त-सारथिं समीपमानाययामास, प्रोवाच च श्लक्ष्णया वाचा—वार्ष्णेय ! स्मरसि त्वं सम्यक् यथा राजा प्रकृतिस्थः त्वाम्प्रति समाच-चार ? त्वं ह्यस्य प्राणा इव वहिश्चराः परमं प्रियः सर्वकार्य्येष्वऽभ्यन्तरीणश्च आसीः, स त्वमि-दानीं अस्य विषमस्थस्य विधेहि स्तोकं साहाय्यं ।

पश्य यथा यथाहि राजा जीयते पुष्करेण, तथा तथैवाऽस्य द्यूतानुरागो विवर्द्धते, यथा चाऽचाः पुष्करस्य सदैवाऽनुकूला: पतन्ति, तथैवाऽस्य प्रतिकूला: ; अतो मन्ये केनाऽपि प्रतिकूल-दैवेनाऽऽक्रान्तेनाऽनेन भवितव्यं। यतोऽयं, मामपि नाभिनन्दति, अपत्यमङ्कारोहणोत्सुकं नालिङ्गति, सुहृत्स्वजनवाक्यान्यपि नाकर्णयति। अतः सारथे! भीताऽस्मि बाढ़ं, दक्षिणाक्षि मे सर्वदैव स्फुरति, गुरुतरं किमप्यनिष्टं अस्माऽऽपतिष्यतीति सदैव मे चेतसि शङ्का जायते ; अतस्त्वामहमिदानीं शरणमापन्नास्मि—विधेहि मद्वचनं, इदं मम अपत्यद्वयं नलप्रियतमैर्मनोजवैरश्वैः आयोजितं रथमारोप्य कुण्डिनपुरं याहि, समर्पय च तत्रैमौ दारकौ, स्यन्दनमिदं, वाहांश्च मम पित्रोः। ततस्त्वं तत्रैव वस—यथाकाम मन्यत्र वा गच्छ—यथारुचि कुरुष्वेति।

श्रुत्वा तु दमयन्ती-वचनं नलसारथि वार्ष्णेयो निवेदयामास तत् सर्वेष्वेव सचिववरेषु। अथ तैः समेत्य विविच्य च बहुधाऽभ्यनुज्ञातो जगाम स विदर्भेषु समादाय दारकद्वयं, विधाय च तत्र सर्वं यथादिष्टं वैदर्भ्या, आमन्त्र्य च भीमं दमयन्ती-

पितरं निर्जगाम तस्मात् अनवरत-नल-शोकानल-दह्यमानमानसश्च पर्य्यटन्नितस्ततः गतवानऽयोध्यायां ऋतुपर्णं राजानं, न्यवसच्च तत्र दूयमान-चित्तः सारथ्येन महीपालस्य।

## पञ्चमोऽध्यायः।

निर्य्याते तु वार्ष्णेये दीव्यता पुण्यश्लोकेन राज्यं अपरञ्च धनरत्नादिकं सर्व्वमेवाऽपहारितम्। अथ तं हृत-सर्व्वस्वमवेक्ष्य पुष्करः प्रहसन्नब्रवीत् नल! प्रवर्त्ततां भूयोऽपि द्यूतं? कस्तवाऽधुना प्रतिपाणो भविष्यति? मया तु सर्व्वमेव जितं त्वदीयं, केवल-मेका दमयन्ती विद्यते; अतो यद्यभिमतं भवेत् सैवेदानीं विधीयतां पण इति। एवमुक्तस्य तु पुष्करेण व्यदीर्य्यतेव हृदयं मन्युना पुण्यश्लोकस्य; स तु नो शशाक किञ्चिदप्येनं प्रतिवक्तुं, केवलं हृदय-स्थित-शोकानल-धूम-राशिभिरिव अनवरत-गलद्भि-र्वाष्पवर्षैरुरःस्थलमाप्लुतवान्, उन्मुच्य चाभरणानि सर्व्वेभ्यो गात्रेभ्यः पुनरपि प्रावर्त्तत द्यूताय, व्यजी-

यत च तत्क्षणादेव सर्वं तत् पुष्करेण। अथ स एक-वासाः दीर्घमुष्णञ्च निश्वस्य विहाय श्रियं विपुलां, शोचितः समाकुल-मानसैः सुहृज्जनैः निश्चक्राम पुरोत्तमाद्राजा, दमयन्त्यप्येकवस्त्रा तं व्रजन्तमनुवव्राज। अस्मिन्नेव समये पुष्करो घोषयामास यथा "यः कश्चिन्नले साधु समाचरिष्यति, स मे बध्यतां यास्यतीति"। तद्घोषणात् देवन-समय-कृताऽनभिनन्दनाच्च न सत्कृतवन्त स्तं पौरा यथोचितम्। स तु जलमात्रेण वर्त्तयन् तया राजमहिष्या सार्द्धं बाह्य एव नगरस्य त्रिरात्रमुवास, प्रतस्थे चानन्तरं छाययेवाऽनुगम्यमानो दमयन्त्या, विहाय नगरं यत्र तं नयनयुगलं निनाय।

अथैकदा समतीत-बहुल-देशो धरणीशः क्षुधया पीड्यमानः परमया, ददर्श कुत्रचित् कतिचित् शकुनान् सुवर्ण-सदृश-च्छद-धारिणः, चिन्तयामास च अहो! सुप्रसन्नोऽद्य मे विधाता, येन एवंविधसमये दुर्दशो मे जीवनोपायो दर्शितः—एतेषां पक्षिणां मांसानि पर्य्याप्तं आवयोरद्य भोजनानि भविष्यन्ति —पक्षैस्च विक्रीतैर्धनमपि किञ्चित् लप्स्यते। एवं सम्भाव्य मुदितमानसः परिधानेन वाससा तान्

समावृणोत्, ते च तत् आदाय विहायसा उत्-पतिताः, ऊचुश्च गच्छन्तो भूमिस्थं दिग्वाससं भूपम्—"सुदुर्बुद्धे ! त्वद्वासोजिहीर्षून्नऽश्वानिव तान्ऽस्मानऽवगच्छ, न जाता प्रीतिरस्माकं पथ्यांसां, विलोक्य त्वां निर्यातं सवाससमिति" अथ स समीक्ष्य विहगान् हृत-वसनान् आत्मानञ्च विवाससं विकल इव चणं किं-वक्तव्य-विधुरः तुष्णीमधोमुखस्तस्थौ । प्रत्यागत-प्रकृतिश्च अनन्तरं शनैः शनैर्दमयन्तीमुवाच—प्रिये ! किं कथयामि मे दौर्भाग्यं ! येषां प्रकोपात् अहमैश्वर्य्यात् स्वजनात् स्वदेशाच्च प्रच्युतः, येषामेव कृते पृथिवीपतिरप्यहं क्षुधातुरः प्राणयात्रामप्यऽलभमानः किरात इव वने वने भ्रमामि, यदर्थमेव च तादृशानुरक्ता अपि नैषधा नाहूय मां पृष्टवन्तस्तदानीं, त एवेमे अक्षाः शकुनीभूय वासो मे हरन्ति ! पश्याऽहं कीदृशीं विषमां दशां प्राप्तः ! मन्ये विधिकोपो नाद्यापि प्रशाम्यति, न जाने कियच्चिरं वा फल-मस्याऽनुभविष्यामि । नाहमिदानीमात्मार्थं शोचामि, भवतु पूर्ण-कामो मयि दुर्विधाता ; किन्तु किं करिष्यसि त्वं सुकुमारी राजबाला ? अहं ते भर्त्ता—अतो यदहमात्महितं त्वामिदानीं ब्रवीमि

तत्-अवहिता समाकर्णय ;—एते बहवः पन्थानः संमतिक्रम्याऽवन्तीं पर्वतञ्च ऋत्तवन्तं दक्षिणापथं यान्ति—एष विन्ध्यो नाम महाशैलः—असौ पयोष्णी सरित्—इमे च बहुमूल-फलान्विता महर्षीणामाश्रमाः—एष पुरोदृश्यमानः पन्था विदर्भाणां, अयञ्च कोशलां गच्छति—अतःपरस्मासौ दक्षिणे दक्षिणापथो नाम देश इति।

श्रुत्वा तु वल्लभ-वचनम् उद्भ्रान्त-हृदया प्रावोचत पति-प्राणा, नाथ! किमिदं त्वया कथ्यते? चिन्तयन्त्याः पुनःपुनस्त्वत्सङ्कल्पं वेपते मे हृदयं, सीदन्त्यङ्गानि, विघूर्णति मस्तकं, न च पश्यति नेत्रं निमीलितमिवाऽन्धकारेण। कथमहमिदानीं त्वां हृत-राज्यं विवसनं क्षुत्पिपासाकुलञ्च निर्ज्जनेऽस्मिन् वने विहाय गच्छेयं? कान्त! कथितं खलु पण्डितैः यथा पत्नी हि परममौषधं नराणामार्त्तानाम्, न विद्यते कश्चिदपि जगति तादृशो बन्धुस्तेषां दुःखसमयेषु; अतोऽहं प्रियतम! ब्रवीमि, अध्वक्लान्तस्य ते चरणाऽवहं सम्वाहयिष्यामि, घर्म्मोपरुद्धस्य ते तरु-पर्ण-वीजनैः स्वेदमपनेष्यामि, क्षुधार्त्तस्य ते फल-मूलानि आहरिष्यामि, तृषातुरस्य ते पानीयमानेष्यामि, पूर्व-सुख-

चिन्तनेन प्रवृद्धशोकस्य च ते कण्ठे गृहीत्वा नयन-जलं प्रोञ्छिष्यामि। मा मां नाथ हासीरनाथा-मिव—एष ते चरणयोरञ्जलिरिति। अथ नलः प्रत्युवाच तां वाष्प-पर्य्याकुलाचीं, प्रिये! यदैत-दात्थ तत्तथैव, अहमपि जानामि यन्नास्ति मित्रं भार्य्या-समं दुःखमग्नानां नराणाम्—अतो नाहं त्वां त्यक्तुमिच्छामि, त्वन्तु भीरु! वृथैव शङ्कसे; किम्बहुना प्राणाधिके! अहमात्मानमपि त्यजेयं न च त्वां मद्गत-जीविताम्। ततस्तथावादिनं नैषधं प्राह दमयन्ती—हृदयेश्वर! जानाम्यहं ते हृदयं त्वञ्च ममापि; अवैमि चाहं यथा त्वं मां विहाय न पारयिष्यसि क्षणमपि स्थातुम्—किन्तु त्वमिदानीं मोहेनाऽऽवृतः कार्य्याकार्य्य-विधुरः संवृत्तः, अतएव मे शङ्का जायते—यदि वा नाथ! न मां त्यक्तुमिच्छसि कथं तर्हि विदर्भाणां पन्थानमभीक्ष्णमुपदिशसि? एतदध्व-प्रदर्शनेनैव स-मुद्भ्रान्तं नानाशङ्काकुलञ्च भवति मे चेतः। अथ चेत् अयमभिप्रायो भवतः यदहं पितृसकाशं गच्छेयमिति—भवतु तदेव, सहितावेव आवां विद-र्भान् गच्छावः? तत्र त्वं विदर्भ-नाथेन परमया मुदा पूजितः सुखं वत्स्यसीति। प्रत्याह निषधे-

श्वरः अयि सुचन्निये ! सत्यमेव विदर्भराज्यं यथा तव तातस्य तथा ममापि, न तत्राऽस्ति कश्चि-दपि विशेषः, किन्तु गन्तुमिच्छामि नाऽहमिदानीं तत्र अनया विषमयाऽवस्थया ; पूर्वं हि गतं तत्र मां विलोक्य समृद्धिसंयुतं हर्ष-भर-निर्भरा बभू-विथ, अधुना तु दृष्ट्वा तत्रैव मामकिञ्चनं न पारयिष्यसि सम्बरीतुं शोकान्—अतो न तत्र गमनमुचितं ममेदानीं—दृश्यतां तावद्विधेर्विल-सितं, स्थीयताञ्च कानिचित् अहानि अत्रैव, इति पुनःपुनर्ब्रुवन् सान्त्वयंश्च तत्कालोचिताभिर्वाग्भि-र्दमयन्तीं तस्याएव वसनस्याऽर्द्धं परिहितवान् निषधराजः ।

अथ तौ एकवस्त्रसंवीतौ पर्य्यटन्तौ वनाद्वना-न्तरं, एकदा प्राप्य काञ्चिद् वृक्ष-मूल-वेदिकां निषेदतुस्तत्र सहितौ क्षुत्पिपासापरिश्रान्तौ । क्षणादनन्तरञ्च मलिनः पांशु-गुण्ठितश्च भूमिपति-रुपधाय वामां बाहुलतां धरणीतल एव शयित-वान् । दमयन्त्यऽपि राज-दुहिता निःसहाऽत्यर्थं-मध्व-श्रमेण भूमावेव शयित्वा निद्रामुपपेदे । सुप्तायान्तु तस्यां शोकाऽवरुद्ध-निद्रा-सुखो निमी-ल्यैव नयने नैषधः, तदैश्वर्य्यं—तत् सुखं—तां द्यूत-

क्रीड़ां—तद्राज्यापहरणं—तं बन्धुजन-विरहं—वर्त्तमानञ्च वन-वास-क्लेशं सर्वमेव समं मनसा स्मर्त्तुमारेभे, चिन्तयामास च, अहो! किमहमासं! किञ्चाहमस्मि! किमहमिदानीं करोमि! किं वा मया कर्त्तव्यं! कथमहं प्राणांस्त्यजेयं? इमां वा मद्गतप्राणां कामिनीम्? इयं हि मदनुरक्ता मदर्थमेव इत्थं दुःखमाप्नोति; विहीना चेन्मया, मन्ये स्वजनान् इयं गच्छेत्। यावदेषा मत्सकाशे वर्त्तिष्यते तावदसंशयमेव दुःखमतितरां प्राप्स्यति तपस्विनी; मदुज्झिता च समाश्रित्य बन्धून् कदाचित् सुखमपि विन्देत।—एवं स कलि-दर्शित-विपरीत-पथो मनुजनाथो वितर्क्य मनसि बहुधा विचार्य्य च वारंवारं, परित्यागमेव प्रियतमायाः श्रेयांसं मेने, मेने चैषा महाभागा पतिव्रता न जातु पथि मद्विहीना तेजसा केनाऽपि धर्षयितुं शक्येति।

एवं तस्य कलि-समावेश-दुष्टबुद्धेर्दमयन्तीविसर्ज्जन एव स्थिरा बुद्धिरजायत। अथाऽसौ आत्मनो विवसनतां तस्याश्चैक-वसनतामाकलय्य परां चिन्तामुपपेदे, निश्चिकाय च मनसा तस्यैव वस्त्रार्द्धस्याऽवकर्त्तनम्। किन्तु वासो विकर्त्तयिष्यामि,

प्रिया च मे न जागरिष्यति, कथमीदृश उपायो भवेदिति चिन्तयन् तामेव वेदिकां विलोकयितुमारब्धवान् दृष्टवांश्च तस्मिन्नेव तरुमूले निपतितं विकोषमेकं चन्द्रहासम्। दृष्ट्वा हृष्टश्च तेनैव छित्त्वा वसनस्यार्द्धं स्वयम्परिहितवान्, उत्सृज्य च हृदयवल्लभां गतचेतनामनाथामिव तस्मिन् विजने पतितां सत्वरं प्रदुद्राव। अथ स गत्वा कतिचित् पदानि पुनः प्रतिनिवृत्य दमयन्तीं सुप्तामालोकयन् विगलदश्रु विलपितुमारेभे—अहो! यामादित्यश्चन्द्रो वायुर्वा पुरा न पश्यन्ति स्म, सेयमद्य मे प्रियतमा भूमौ अनाथेव धूलिधूषरिता शेते! अहो! दृष्ट्वाऽप्येतन्नलस्य हृदयं न सहस्रधा दीर्य्यते!—हा प्रिये! हा चारुहासिनि! हा मधुर-भाषिणि! हा मदर्थ-परित्यक्त-सर्व-सुखे! हा मन्मथ-जीविते! एतदेव त्वया दुरात्मनो नलात् प्रियमाकाङ्क्षितम्? एतदर्थमेव स्वयम्वरे देवगणस्त्वयाऽवमानितः? हा विदर्भ-राजाङ्गजे! हा निषध-राजमहिषि! हा अनुपम-रूप-लावण्ये! एष ते परिणामः? हा! प्रतिबुध्य मामपश्यन्ती कथमिव त्वं भविष्यसि? कथं वाऽस्मिन् विजने सिंह-शार्दूल-सेविते मया विरहिता उन्मत्त-वेशा एका-

किनी विचरिष्यसि? भो भो आदित्याः! वसवः! रुद्राः! मरुद्गणाः सर्वे च देवाः! रक्षन्तु भवन्तः पतिव्रतां धर्म्म-कञ्चुक-संवृतामिमामबलाम्। एवं स पुण्यश्लोको रुदन् विलपंश्च प्रातिष्ठत गन्तुं। गत्वा—च प्रतिनिवृत्त्य पुनःपुनरेव तां वेदिकामाजगाम। स एकतः कलिना,—अपरतश्च स्नेहेनाऽऽन्तरेण आकृष्यमाणो मुहुः दोलेव यया वाययौ च। अथ कलिना गाढ़मवकृष्टो विसृज्य तां वनितामेकाकिनी मरण्ये शून्ये परिदेवयन् अतिकरुणं विलोकयंश्च तां नयनाऽमृत-वर्त्तिं निद्राभिभूत-चेतनां विच्छिन्न-स्नेहपाशो बाष्प-स्रात-वक्षाश्च एकतः प्रतस्थे।

## षष्ठोऽध्यायः

अपक्रान्ते तु नले गत-क्लमा प्राबुध्यत विदर्भ-राज-नन्दिनी, अपश्यन्ती च पार्श्वे प्राणनाथं पूर्वादेव सञ्जात-शङ्का भय-विह्वला हा नाथ! हा महाराज! किं परित्यज्य मामेकाकिनीं शून्ये

गहने पलायितोऽसि ?—हा हताऽस्मि—हा विन-
ष्टाऽस्मि, हा विकलाऽस्मि, हा जीवितेश ! हा
पत्नी-वत्सल ! परित्रायस्व मां भीतां त्वया विना
अस्मिन् कान्तारे ; हा धर्म्मज्ञ ! हा कारुणिक !
कथं सुप्तामनुव्रतामनपकारिणीं विहाय वने भार्य्या-
मन्यत्र पलायसे ? हा सत्य-सन्ध ! कथं लोक-पा-
लानां सन्निधौ तादृशमभिधाय तद्विपरीतमाच-
रसि ? हा जीवितेश्वर ! बुद्धं मया यन्नाऽकाले
कदापि भवति मृत्युर्मर्त्यानां, यत स्त्वदुत्सृष्टाऽप्यहं
मुहूर्त्तमपि जीवामि !—अयि चतुर-चूड़ामणे ! बुद्धं
मया परिहासस्त्वयाऽयं कल्पित:—पर्य्याप्तोऽयं परि-
हास:, विरमत्वऽयमिदानीं—अहमत्यर्थं भीताऽस्मि
—दर्शयाऽऽत्मानम्—नाऽहमत:परं शक्नोमि सोढ़ुं ;
—राजन् एष त्वं दृश्यसे !—दृश्यसे !—अहो दृष्टो-
ऽसि !—कथं गुल्मे त्वात्मानमाहृत्य मां त्रासयसि ?
—सर्वथा नृशंसोऽसि संवृत्त:, यन्मामेवङ्गतामा-
विर्भूय पुरतो नाश्वासयसि !—कथं तथापि न
प्रतिवचनं ?—सत्यमेव पलायितोऽसि ?—हा नाथ !
हा निषध-राज ! नाहमात्मार्थं किमपि शोचामि
—फलतु वत्, यन्मे भाग्ये लिखितं वेधसा ; केवल-
मिदमेवाऽहं चिन्तयामि यत् सायाह्ने श्रान्त: क्षुत्-

पिपासाकुलो वृक्षमूले निषसश्च मामपश्यन् पार्श्वे कथमिव त्वं भविष्यसि ? कस्ते पानीयमानेष्यति ? कस्ते फल-मूलानि आहरिष्यति ? कस्ते पादौ सम्बाहयिष्यति ? कश्च ते शोकं शमयिष्यति ? हा नाथ ! हा निषधेश्वर ! हा सर्व-गुणाकर ! क्वासि मे देहि प्रतिवचनं—इत्येवमपरञ्च विलपन्ती मुहु-रितस्ततो दत्तदृष्टि रुन्मत्त-दर्शना वन-मभितो धावितु मारेभे ; तीव्र-शोक-समाविष्टा च मुहुरे-कतो दधाव—मुहुश्चैकत्र निषसाद—मुहुर्मुक्तकण्ठं चुक्रोश मुहुश्च मूकेव तुष्णीं तस्थौ, मुहुर्विचेतना संवृत्ता, मुहुश्च केशानाऽऽच्छिद्य वक्षस्ताड़ितवती, मुहु भीता वेपते स्म, मुहुश्चाऽसीम-साहसा सर्वतो विलोकयामास ।

इत्येवं शोक-भय-समाकुला पतिमन्विष्यन्ती विलपन्ती धावन्ती क्रोशन्ती च चेतसि चिन्त-यामास दमयन्ती,—अहो कथमीदृशः पुण्यश्लो-कस्य बुद्धि-विपर्य्यासो जातः ? स तु कदापि मनसाऽपि पापं नानुष्ठितवान् । यः खलु तमपाप-चेतसं परम-धार्म्मिकमीदृशं दुःखमानीय मोदते, अनुभवतु स दुरात्मा दुःखमधिकतरमस्मादपि । इत्येवमभिशप्य पूर्ववदेव परिदेवयन्तीं विच-

रन्तीञ्च नल-दर्शनाकाङ्क्षया सर्वमेव तद्विपिन-स्यांऽभ्यन्तर-भागं जग्राह सहसा कश्चित् महाकायः क्षुधान्वितः तामभ्यास-गतामजगरः। सा तु ग्रस्यमाना ग्राहेण भयोद्भ्रान्त-चेतना हा नाथ! हा राजन्! त्रायस्व मामनाथामिव भुजगेनाऽनेन कवलिताम्। कथमिदानीमप्युदासीनस्तिष्ठसि! शीघ्रं दर्शयाऽऽत्मानं, सत्यमेव निष्ठुरोऽसि संवृत्तः! हा नयनानन्दन! सत्यमेव न पुनस्त्वामस्मिन् जन्मनि एताभ्यां चक्षुर्भ्यां विलोकयिष्ये? प्रीतिप्रद! अधुना सकृदेव पुनराविर्भूय पुरतो मे तिष्ठ, अहं विलोक्य त्वामप्यद्याहं कृतार्था प्राणांस्त्यजामि— पालयस्वेमां मे चरमां प्रार्थनामिति त्यक्त-जीविताशं मुक्तकण्ठं क्रोशन्ती ददृशे केनचित् क्रन्दन-शब्दानुसारिणा मृगयार्थमटता मृगजीवनेन। स तु विलोक्य तादृशे विपिने ग्रस्तां भुजङ्गमेन रूपेणोद्भासयन्तीं वनराजिं आयत-लोचनां वराङ्गणां ससम्भ्रमाकलित-निशित-निस्त्रिंशः शातयामासाऽस्य व्यालस्य शिरोधरां, मोचयामास तां मूर्च्छित-प्रायां, सलिलैः क्षालिताऽवयवां समाश्वस्तां कृता-हाराञ्च पश्चात् पप्रच्छ—अयि मदिरेक्षणे! काऽसि! कस्याऽसि? कथमिदममानुषं घोर-

मरणमागता? कथं वेदं कृच्छ्रमति-महत् प्राप्त-वती? सा तु पृष्टैवं प्राण-रक्षकेण वाष्पाकुल-मुखी सर्वं मामूलतो वृत्तं निजगाद। व्याधस्तु निरीक्ष्य तामर्द्धवसन-सम्वीतां राका-शशाङ्कसङ्का-शाननां सर्वावयवानवद्यां कोकिल-कल-भाषिणी-मेकाकिनीं शून्ये गहने, वश्यता मुपेतो मनो-भवस्य, श्लक्ष्णया वाचा सान्त्वयितु मारेभे। बुद्धा च तमस्य मनोगतं भावं भाविनी तीव्र-रोष-समा-विष्टा मन्युना प्रजज्वालेव पतिव्रता। स च पापमति-रुपलभ्य तां प्रतिकूलवर्त्तिनीं तत्स्थानात् अपगन्तु मिच्छतीञ्च पञ्च-शर-शर-जर्ज्जरितो धर्षयितुमियेष, मत्वा च तामग्निशिखामिव ज्वलन्तीं नो शशाक सहसाऽऽक्रमितुम्। अथ तादृशे काले रोष-शोक-भय-विक्लवाङ्गी सर्वथाऽसहाया ध्यायन्ती हृदये हृदयेश्वरं प्रार्थयन्ती च मानसेन एकाग्रेण सुरान् शरणं वाष्पसन्न-कण्ठी 'यथाऽहं कदापि मन-साऽपि नलादन्यं न चिन्तितवती, तथा पतत्वयं क्षुद्रः पशुमारः परासुः' इति रोषादुक्तवती। सोऽपि शममात्र स्तया साध्व्या मृगाजीवो द्रुम इव छिन्नमूलो धरायां पपात च ममार च।

अथैवं निपात्य तं मृगाजीवं प्रतस्थे पृथिवी-

पाल-महिषी, गच्छन्ती च परितो झिल्लिका-गण-नादितं, सिंह-शार्दूल-मृग-महिष-गण्डार-वराह-वानर-शृगाल-भल्लकाद्यै रारण्य-जीवैः सर्वतः सञ्चरितं, विविध-विराव-विहङ्गम-गणाघुष्टं, शाल-ताल-तमाल--सहकार--कदम्ब-जम्बु--खदिर- खर्ज्जुर-विल्व-वदरी-किंशुक-शाल्मली-वट-वंश-वेत्र-हरीतकी प्रभृतिभि र्महीरुहगणै राच्छन्नं, सर्व-जन-लोम-हर्षणं काननं ददर्श, ददर्श च तत्र नानाधातु-रञ्जिताऽनभ्रंलिह-शिखराग्रान् बहुविधानऽचलान्; रमणीयान् निकुञ्जान्; प्रवहमानाः स्रोतस्वतीः; स्फटिक-सङ्काश-सलिल-पूर्णानि सरांसि; गिरि-शिखरेभ्यो निपततो मुखरित-दिगन्तान् निर्भ-रान्; सर्वतश्च विचरतो भीम-भोगान् भुज-गान्। सञ्चरन्ती तु सा एकाकिनी तथाभूतायां दारुणाया मटव्यां पतिं मार्गयन्ती तेजस्विनी विदर्भ-राज-नन्दिनी कुतोऽपि भयं नाधिजगाम; आश्रित्य च कञ्चित् शिलातलमुन्मत्तवेशा शोक-भर-भिन्न-हृदया विलपितु मारेभे।

राजन् निषधेश्वर! क्व नु गतोऽसि मा मेका-किनी मरण्येऽस्मिन् विजने परित्यज्य? हा सत्य-सन्ध! अश्वमेधादिभिराहवैरिष्ट्वा प्राप्य च पवि-

चकार्थतया जनेषु ख्यातिं 'पुण्यश्लोक' इति, कथमनाथायां त्वदेक-शरणायामयुक्तरूपं मयि समाचरसि ? स्मर नरेश्वर ! यत् त्वया स्वयम्बरसमये सर्वेषामेव पुरतः प्रतिश्रुतं ; सत्यरक्षणमेव साधूनां धर्म्मः—विशेषतो भवादृशानामस्य ; हयसहस्राश्वमेधानां न तुलां प्राप्नोति सत्यकथनस्य ; अतः पालय सत्यं सत्यज्ञ ! यत् त्वयाऽवलम्बितं प्राक् मत्सकाशे। हा नाथ ! करुणापर ! कथमटन्तीमुद्भ्रान्तामिव मां घोरयामस्यामटव्यां नहि प्रतिभाषसे ? अयं हि भीषणाकृतिर्मृगराजो व्यादाय मुखं मामत्तुमागच्छति, किं न त्रायसे ? नाथ ! क्षुधया पिपासया चाऽऽकुलाऽस्मि, किं मदर्थं फलानि पानीयं वा नान्विष्यसि ? रक्षणं हि पत्नीनामनुव्रतानां सत्पतीनां धर्म्मः—तत् कथं तं नानुवर्त्तसे ? कथमहं मत्तेव विलपन्ती दीना, मलिना, विवर्णा, वस्त्रार्द्ध-संवीता च उन्मत्तेव वनाद् वनं भ्रमन्ती पृथिवी-नाथ-प्रियाऽपि अशेष-जन-शरण्याऽपि कमपि शरणं नाधिगच्छन्ती हरिणीव यूथ-भ्रष्टा भय-विह्वल-नयना किं-कर्त्तव्य-विमूढ़ा सर्वतः परिधावामि, द्रुतपदमागत्य मां नाश्वासयसि ? हा प्रियतम ! त्वद्गत-जीविता भीता महारण्येष्वेका-

किन्नो दमयन्ती त्वामाक्रन्दति, किं न प्रतिभाषसे ? हा प्राणवल्लभ ! दृष्ट्वा मामीषदपि विषस-वदना-मुद्भ्रान्त-हृदयो बभूविथ, कथमिदानीं तामेव मामीदृशेषु दुःखसागरेषु निमग्नामुपेक्षसे ? अयि जीवितनाथ ! किं द्रक्ष्यामि पुनस्ते मुखचन्द्रमस्मिन् जन्मनि ? अथवाऽयमेव शेषः तादृशस्य सुखस्य मन्दभागिन्याः ?—अहो असमर्थास्मि चिन्तयितुमपि मनसि, यदऽहमस्मिन् कानने पुरोवर्त्तिनि वा गिरि-पृष्ठे न त्वां कदापि द्रक्ष्यामि शयानं, आसीनं परितो वा भ्रमन्तं—कं नु खलु घोरेऽस्मिन् सिंह-शार्दूल-सेविते वनप्रदेशे पृच्छामि 'अपि दृष्टस्त्वया क्वचि-दपि शारद-शशधर-समानो निषधराजो नलः' इति ? कोहि वर्षिष्यति श्रवणयोर्मे सुधाधारां, निगद्य मे 'राजमहिषि ! दृष्टो मया चारु-सर्वाङ्गो विपुल-वक्षा विशाल-नयनो भ्राम्यन् अमुस्मिन् प्रदेशे निषधाधिपः, यं त्वं वने वने मृगयसे' इति। अयं हि पुरतः स्फीत-केशरो विवृत-वदनः सिंहः समभ्येति, भवतु पृच्छाम्येनं तावत् कृताञ्जलिः—अयि मृगराज ! अहं हि तनया विदर्भ-नाथस्य, महिषी निषधराजस्य दमयन्ती नाम भ्रमामि वने वने पतिं नष्टमन्विष्यन्ती ; त्वमस्य काननस्य प्रभुः,

ब्रूहि—यदि कदाचिदवलोकितस्त्वया सर्वाङ्ग-सुन्दरो मे प्राणवल्लभः ? नचेद् भच्चयित्वा समुत्तारय मामस्माद्व्यसनार्णवात्। कथं नाऽयमाकर्ण्य मे प्रार्थनां गतवानऽन्यां दिशं! भवतु, पुरोवर्त्तिनम् अनेकवर्णैर्मनोहरैरभ्रंलिहेर्बहुभिः शिखरैः शोभितं, सिंह-शार्दूल-मातङ्गवराह-मृगगणासेवितं, विचित्रविहगावली-संयुतं, फल-भर-नतैर्नतोन्नतैर्लतागुल्म-तरुभिरावृतं, खर-शब्दाभिर्विमल-सलिल-वाहिनीभिर्निर्झरिणीभिरुपेतं शिलोच्चयं तावदिमं पृच्छामि—भगवन् अचलेश्वर! त्वामहं प्रणमामि—जानीहि मां राजपुत्रीं—राजस्नुषां राजपत्नीञ्च दमयन्तीं नाम—महाबलो महारथो रच्चिता चातुर्वर्ण्यस्य, आहर्त्ता वाजपेयाश्वमेधादि-क्रतूनां, विजेता सागरान्तायाः पृथिव्याः, विश्रुतकीर्त्तिर्विद्यते विदर्भेषु राजा भीमो नाम; अहं तस्यैवाऽऽत्मजा। आसीन्निषधेषु सुगृहीत-नामा स्मरणीय-शुभ-कार्य्य-कलापः पुण्यवानऽतीव, नरपतिरार्य्योवीरसेन इति, तस्यात्मजः रूपोपहसित-नलकूवरः, मनोभव इव मूर्त्तिमान्, प्रताप-नमित-समस्त-सामन्त-चक्रः, विक्रमैक-निलयः निखिल-वेद-वेदाङ्ग-पारगः, समाहृत-सदच्चिण-बहुशत-यज्ञः, विश्रुतः 'पुण्यश्लोक' इति।

नाम्ना, पालयिता पुत्रवत् प्रजानां, समस्त--सद्-गुणाभिरामो भूपतिर्नलो नाम मामुपयेमे। स हि भाग्यवशादपहारित-समस्त-विभवः परित्यक्त-राज्यः समवलम्बित-काननाश्रयो विहाय मां विकृत-मतिर्मानव-सम्पर्क-शून्येऽस्मिन् विपिने, क्वापि 'गतवान्; अहन्तु तं हृदय-नाथमितस्ततो मृगयमाणा भ्रमामि विपिनाद्विपिनान्तरं—त्वं हि गिरिराज! निरीक्षसे गगनोल्लेखिभिः शिखरैः समस्तामेव वनभूमिं—अपि दृश्यते दृष्टोवाऽत्र क्वचिदपि घन-केशजालः—प्रशस्त-ललाटः—आकर्ण-विश्रान्त-लोचनः—कम्बु-ग्रीवः विशाल-वक्षाः—दीर्घ-बाहुः—सर्वाङ्ग-सुन्दरः—गजेन्द्र-विक्रमो नलाभिधानो निषधराजः?—कथं तुष्णीं स्थीयते?—न किञ्चित् प्रत्युच्यते?—नगाधिप! कथय! कथय! कुत्र स आस्ते?—अहं सातिशयं भीताऽस्मि, अतीव व्याकुलाऽस्मि—प्राणान् धारयितुमक्षमाऽस्मि—अलमतःपरमपि विलम्बेन!—कथं तथापि न प्रतिवचनम्!! हा नाथ! हा हृदयवल्लभ! हा धर्म्मवत्सल! हा सत्यसन्ध! किमिदं? यन्न कोऽपि 'नैषधं दृष्टवानऽस्मि' इति ब्रवीति! हा! न पुनः श्रोष्याम्येव किं जीमूत-सान्द्रामम्‌तोपमां 'का भीतिर्वैदर्भि!' इति वि-

स्पष्टमधुरां, नाथ! ते भारतीम्? हा किमिदमापतितं मे मन्दभाग्याया दमयन्त्याः?—सर्वथाऽहमतीव निष्ठुराऽस्मि यदेतादृशावस्थाऽपि जीवामि!

इत्येवमादि परिदेवयन्ती मत्तेव, उन्मत्तेव, विकृत-दर्शना, भर्त्तृ-दर्शन-लालसा, पर्य्यटन्ती दमयन्ती, अवलम्ब्य दिशामुत्तरां त्रीनहोरात्रान् गतवती, दृष्टवती च क्वचिदेकत्र, आहुति-धूम-स्निग्ध-पल्लवै-र्बहुल-पुष्प-फलशालिभि रविरलच्छायैः पादपैरावृतं, परित्यक्त-सहज-वैरै-र्मृग-मृगेन्द्र-तुरङ्ग-महिष-काकोलूक-प्रभृतिभिर्जीवगणैः सर्वतः सञ्चरितं, जलाहारै-र्वायुभक्षै-र्गलित-पर्ण-जीविभिश्च वल्कलाजिन-वासोभिर्जितेन्द्रियैः प्रशान्त-मानसै-र्भृगु-वशिष्ठ-नारद-मरीचि-समै स्तापसै रुपशोभितं, किमपि रमणीयं तपोवन-मध्यगतमाश्रमपदम्; दृष्ट्वैव जन-समागम-शून्ये विजने मानुषाकारान् विशेषतो विश्वसनीय-प्रकृतीन् मुनिजनान् परं हर्षमवाप राजमहिषी। प्रविश्य चाश्रम-पदं विनय-विनम्र-मूर्त्तिस्तपोधनान् प्रणनाम। तैश्च, भद्रे! स्वागतं ते? इहाऽऽस्यतामित्युक्ता यथाविधि सत्कृता च तेषां सर्वत्र वार्त्तां जिज्ञासितवती, प्रत्युक्ता च—महाभागे! जानीहि त्वमस्माकं सर्वत्रैव शुभं

परं पृच्छामस्त्वां, काऽसि ? कस्य ाऽसि ? किमर्थं वा वने वने भ्रमसि ? दृष्ट्वैव तवातिमानुषं रूप-लावण्यं परं विस्मयमापन्ना वयम्—का त्वमनि-न्दिते ! किमस्या अटव्या देवी ? उताऽस्य महीधर-स्याऽधिष्ठात्री ? आहोस्विदस्या निम्नगायाः आत्म-रूपाऽसीति ? सा तु श्रुत्वैतदृषिवचनं लज्जा-विनय-मन्थरमभिधातुमारभत—अयि तपोधनाः ! नाहं देवी, नान्या वा काचित् देवयोनिः—मां मानुषीमवगच्छन्तु भगवन्तः इत्युक्त्वा निवेद्य च सर्वमामूलत आत्मवृत्तान्तं पप्रच्छ, कच्चिदिदं भग-वतामाश्रमपदं कदाचित् प्रविष्टो नलो निषधे-श्वरः ? अपि दृष्टः कदाचित् तादृशः पुरुषो वनेऽ-स्मिन् भ्रमन्—तरुमूले वा शयितः—तटिनी-तटे वा आसीनः वस्त्रार्द्ध-संवृतो धूलि-धूसरित-गात्रः समि-त्पुष्प-जलाहरणार्थमितस्ततः पर्य्यटद्भिर्भगवद्भिः ? —यत्कृतेऽहमीदृशं व्यसनं प्रपन्ना, यदर्थमहं श-रारु-चक्र-भीषणं सर्वभूत-लोमहर्षणं गहनं पर्य्य-टामि, यदि न पश्येयं कैश्चिदहोभिस्तं मे जीवित-नाथं, तदऽवश्यमेव दुःखावसानं करिष्यामि प्रा-णानामेषां विमोचनात् ; किं मे जीवितेन प्रयो-जनं तत् पुरुषरत्नं विना ;—हा कथं ! तेन वियो-

जिताऽपि इदानीमप्यऽहं जीवामि! अहो मे नृ-शंस-हृदयता! हा नाथ! हा हृदयवल्लभ! सम्भ-वय मामीदृशे समये आत्म-प्रदर्शनेन।

इत्येवमादि बहुविधं विलपन्तीं भीमनरेन्द्र-नन्दिनीं तापसाः करुणार्द्र-मानसाः सादरं सम्भाष्य समाश्वास्य च मधुराभिर्वाग्भिः प्रोचुः—'कल्या-णिनि! वयं तपसा भूतं वर्त्तमानं भावि च सर्व-मेव पश्यामः, अतः वयं त्वां ब्रूमः यत् त्वं न चिरा-देव द्रक्ष्यसि पुनः पतिं, पतिव्रते! सर्वपाप-विनि-र्मुक्तं सर्व-शुभ-समेतं तदेव नगरं पूर्ववत् प्रशासतं नलं निषध-राजम्, माऽत्र नो वचसि विकल्पः कार्य्यः' इत्यभिधाय ते नल-वल्लभां सहसैवाऽन्त-र्दधुः साश्रमास्तपोधनाः। अथ सा दृष्ट्वा तत् मह-दाश्चर्य्यं भय-विस्मय-निमग्ना प्रारभत मनसि चिन्त-यितुम्—अहो किमेतत्! किम् स्वप्नो मया दृष्टः? न चाहं निद्रिता—किमैन्द्रजालिक-विचेष्टितमिदम्? न कोऽप्यैन्द्रजालिकोऽत्र दृश्यते! किमासुरी दैवी वा काऽपीयं माया? को वा मन्दभागिनीं प्रतार्य्य कस्याऽपि फल-लाभाशयः! चित्रं! चित्रं! क्व ते तापसाः! क्व तदाऽश्रम-मण्डलम्! क्व च सा पुण्यजला तटिनी? गन्धर्व-नगरमिव सर्वमेव मे

पश्यन्त्या एव विलीनम्! किमिदानीं करोमि? क्व गच्छामि? कस्य पुरतः स्वदुःखं निवेदयामि? कं वा शरणमुपयामि? हा प्राणेश्वर! आदिश इदानीं किं मया कर्त्तव्यं मन्दभागिन्या त्वया विनाकृतयेति भूयो भूयः परिदेवयन्ती किं-कर्त्तव्य-विमूढ़ा तमेव कान्तारं पत्युरन्वेषणार्थं भ्रमितु मारेभे, ददर्श च बहुशो द्रुम-गुल्म-लता-वृतान् पर्वतान्, मधुर-राव-राविणो विहङ्गमान् कलकल-मापततो निर्झरान्, विचित्र-मृग-गणसंयुतानि कान-नानि, विमल-सलिल-सञ्चारिणीः सरितश्च।

एवं सा गत्वा कियन्तमध्वानं शुचिस्मिता, क्वचिदपि गज-वाजि-रथ-समूह-सङ्कुलं विविध-पण्य-पूर्ण-शकट-सङ्घ-समेतं काञ्चिदायतां नदीमुत्त-रन्तं महान्तं कमपि सार्थम् ददर्श, प्रविवेश च तेषामेव जनानां मध्यं सुमध्यमा। अथ ते सार्थ-पुरुषा दृष्ट्वैव तामुन्मत्तरूपां शोकाकुलितां वस-नार्द्धसंवृतां कृशां विवर्णां मलिनां धूलिध्वस्त-शिरोरुहाञ्च—केचित् भय-विकल-गात्राः प्रदुद्रुवुः, केचित् केयं भविष्यतीति परां चिन्तामापुः, केचित् हताः स्म इति मत्वा विचुक्रुशुः, केचिद्विकृताकार-दर्शनेन जहसुः, केचित्तां हन्तुमुद्येमुः, केचिच्च

कृपया जिज्ञासितु मारेभिरे—काऽसि ? कस्याऽसि त्वं वरवर्णिनि ! कं वा वनेऽस्मिन् दारुणे मृगयसे ? दृष्ट्वा त्वामीदृशाकारां विस्मिता भीताश्च वयं संवृत्ताः—कथय सत्यं—अपि मानुषी त्वम् ? अरण्यस्याऽस्य महीधरस्य वा देवता ? विद्याधरी यक्षी राक्षसी वा काऽपि विहरसे ? अथवा या वा सा वा भवसि, वयं त्वां शरणं प्रपन्नाः—रक्षाऽस्मान् शरणागतान्, विधेहि क्षेममस्मत्-सार्थवाहस्य, यथाऽयं सगणः सद्रव्यः समीहितस्थानं यायादिति। सैवमुक्ता लज्जा-विनय-मन्थरमवादीत्—मानुष्येवाऽहं सार्थपुरुषाः ! नैव देवी नाऽपि काऽपि देवयोनिः ; विदर्भाधिपतेर्भीमस्याऽऽत्मजाऽहं, नलस्य च निषधेश्वरस्य वनिता—पतिमन्विष्यन्ती वने वने विचरामि। अपि दृष्टो भवद्भिः सुदूरादागच्छद्भिः गजेन्द्रविक्रमः सिंह-संहननो नलो नाम कश्चित् पुरुषः ? येन तु वसनार्द्ध-संवीतेन धूलि-धूसरितेनाऽति-तेजस्विना—वह्निनेव भस्माच्छादितेन भाव्यम्।—कथयत, महाभागाः ! दृष्ट इति ! जीवयत च तदेकजीवितामेतां मन्दभागिनीम् ! अथ शुचिर्नाम सार्थवाह स्तामनवद्याङ्गीमुवाच साध्वि ! कल्याणिनि ! अहमेवाऽस्य महतः

सार्थस्य नेता, आगच्छामि च विदूरात्—बहूनेवाऽस्मिन् महति गहने शार्दूलान् महिषान् कुञ्जरान् वानरान् मृगान् मृगेन्द्रांश्चाऽपश्यम्—न च कदापि भवतीं मानुषीं विहाय कमपि मर्त्यं व्यलोकयमिति। अथ सा भग्न-हृदया पुनरेव तं पृष्टवती, कुत्र खलु देशे सार्थोऽयम्भवतो गमिष्यति? चेदिराजस्य सुवाहोर्जनपदमिति प्रत्युक्ता च।

अथाकर्ण्य तत् सार्थवाह-वचनं चारु-सर्वाङ्गी प्रारभत गन्तुं सह तेनैव सार्थेन भर्तृ-दर्शन-लालसापरीता, अतिचक्राम च भूरिशः सरितः बहुविधानि वनानि अनेकांश्च महीधरान् कतिपयैरेव दिवसैः। अथैकदा समतिक्रान्त-बहुलाऽध्वानस्ते वणिजो ददृशुः एकत्र वनान्तरालवर्त्तिनं प्रफुल्ल-कुमुद-कुवलय-कह्लारं निर्मल-शीतल-स्वादुसलिलं तीर-दृश्यमान-प्रभूत-यवसेन्धनं कञ्चिदायतं तड़ागं, मनोदधुस्तत्र निवेशाय श्रान्त-वाहनाः, अवतस्थिरे च पश्चिमं तीरमस्याश्रित्य सत्वरमधिकृतरमणीय-भूमिभागाः। अथ निशीथे स्तिमितेष्वरण्यभागेषु निर्वाणायां दीपावल्यां सुप्तेषु च सार्थपुरुषेषु, किमपि गजयूथं पानीयार्थं तमेव जलाशयमाजगाम: दृष्ट्वैव ते यूथवर्त्तिनो वनगजा

ग्राम्यगजान् इतस्ततः शयानान् रोषात् विस्तृत-गण्ड-स्थला जिघांसया परितो धावितवन्तः। तेषाञ्च, शिखरि-च्युतानां शृङ्गाणामिव, धावमानानां वेगेन वन-विटपिनो भग्नाः, शकट-शिविरादयश्चूर्णिताः, गज-वाजि-गो-खरोष्ट्र-नराश्च विमर्द्दिता बभूवुः। अथ ते निद्रान्धाः सार्थिकपुरुषाः सहसैवाऽतर्कितं भयमुपलभ्य किं-कर्त्तव्य-विमूढ़ा हाहाकारं विमुञ्चन्तः परितो धावन्तिस्म। तत्र करिणां करचरण-दशन-ताड़िताः केचित् भग्न-पादाः, केचन विश्लिष्ट-बाहवः, अन्ये चूर्णित-शिरसः, अपरे विमर्द्दितोदराः, इतरे रुधिराप्लुता बभूवुः। एवं तैर्वन्यगजैस्तस्यां निशीथिन्यामतीव तेषां सार्थिकानां कदनं कृतम्।

ततः प्रभातायां यामिन्यां उदिते च मार्त्तण्डे हतावशिष्टास्ते भ्रातरं पितरं पुत्रं सुहृज्जनञ्च शोचन्तो गन्तुमुपचक्रमिरे तस्मात् प्रदेशात् दिशमार्त्तरवैः पूरयन्तो वणिजः। अथ वैदर्भी तादृशेऽपि विपत्पाते अमुक्तजीविता सार्थिक-विनाश-दर्शन-दुःख-कातरा च परिदेवयितु मारेभे, अहो! किं मया दुष्कृतं कृतं मन्दभागिन्या? किमपराद्धं विधातुः? केषां नाम दुरदृष्टानां फलपरिणामो-

ऽयम्? जलधिमध्ये फलकमिव यदेव मया सार्थिकवृन्दं मानवसम्बन्धवर्ज्जितेऽस्मिन् प्रदेशे शरणमवाप्तवती, तदपि ममैव भाग्यविपर्य्ययात् कालरूपिणा मतङ्गजयूथेन हतम्! नूनमद्यापि सुमहानेव दुःखभारो मया भोक्तव्यो विद्यते, तदर्थमेव न विमर्द्दिताऽस्मि करिभिरेतैः। जगति न किञ्चिदपि नराणामदैवकृतं विद्यते; नचाऽहं स्मरामि बालभावेऽपि कर्म्मणा मनसा वाचा वा किमपि दुष्कृतमाचरितं यदर्थमेवं मे दुःखमुपनतं भवेत्। मन्ये स्वयम्बरसमये लोकपाला यन्मया विमानिताः, तस्यैव मे फलमद्य विपक्वम्; नूनं तेषामेव प्रभावेण ईदृशीं विषमां दशां प्राप्तवत्यस्मि; भवतु, भो लोकपालाः! विदन्ति भवन्तो लोकानामान्तरं तत्त्वं, अतो न किञ्चित् मे निवेदयितव्यं विद्यते; केवलमान्तरेण भावेन शरणं वः प्रपन्नाऽस्मि, विधत्त मे तत् यत् युष्मभ्यं रोचत इति। इत्येवमादि विलपन्ती, स्वानि भाग्यानि शोचन्ती, विदर्भराज-तनूजा हतावशिष्टैः सार्द्धं ब्राह्मणादिभि रगच्छत् सा चेदि-राज-राज्यम् प्रविवेश च पुरं सायाह्ने सायन्तन-सुधाकर-सुन्दर-मुखी सुबाहोर्महीपालस्य।

अथ तामर्द्ध-वसन-सम्वीतां पर्य्याकुल-लोचनां कृशां दीनामसंस्कृत-मुक्त-रूक्ष-केशां पांशु-कर्द्दमावलेपेऽपि स्फुट-लक्ष्यमाणाऽलौकिक-रूप-लावण्यां मत्तामिव उन्मत्तामिव किमिवाऽन्विष्यन्तीं नगरान्तरं भ्रमन्तीं नगरवासिनो विस्मयोत्फुल्ल-नयना विलोकयितुमारेभिरे। बालाश्च रथ्या-विहारिणो दृष्ट्वा तां तदाकारां परितः परिवार्य्य केचिज्जहसुः, केचन हस्ततालान् ददुः, केचिदुपल-खण्डादिभिराजघ्नुः, केचिच्च वसनप्रान्तेषु तामाक्रष्टुं प्रवृत्ताः। सा तु तैः, एवमनुगम्यमाना राजाट्टसविधं भ्रमन्ती प्रासादशिरोवर्त्तिन्या राजमात्रा प्रेक्षिता, आनीता च स्वसमीपं धात्र्या समाश्वास्य श्लक्ष्णया वाचा। अथ तां प्रासाद-तलमारूढ़ां रूपेणोद्भासयन्तीमिव दिव्यानि गृहाणि, राजजननी विस्मय-विकसित-नेत्रा पृष्टवती—काऽसि त्वं वराङ्गणि! किमर्थं वा ईदृशावस्था भ्रमसि?—नह्येदं ते मानुषं रूपं! उन्मत्तवेश-प्रच्छन्नाऽपि लक्ष्मीरेव त्वं मे प्रतीयसे। एषा खलु ते गात्रयष्टिर्विहीनाऽपि भूषणैर्मेघोदर-मध्यगता तड़िदिव लक्ष्यते, अतो नार्हसि मां प्रतारयितुं, ब्रूहि सत्यं काऽसि कस्याऽसीति।

साऽब्रवीत् मैवं ब्रूहि मां महाभागे! भर्त्तृ-

दर्शन-लालसामनीचजातीयां सैरिन्ध्रीं मामवेहि। भर्त्ता हि मन्दभागिन्या असंख्येय-गुणो रूपवानुदारसत्त्वो दिवस्पत: कोऽपि देव इव मूर्त्तिमान्, यस्याऽहं छायेवाऽनुगामिन्याऽऽसम्। अथ भाग्य-विपर्य्ययादतिमात्रं देवने प्रसक्त:, निर्ज्जित: सकलानि रत्नानि, वनमेकाकी स एकवसन: समाश्रितवान्, अहञ्चाऽनुवव्राज नानोपायैस्तं समाश्वासयन्ती। अथ केनचित् कारणान्तरेण तदप्येकवसनं तेनाऽपहारितं, परिदधे च स ममैव वसनस्याऽर्द्धम्। अनन्तरमेकदा तदपि स छित्त्वा परित्यज्य मां निद्रातुरां निर्ज्जनेऽरण्ये, क्वापि पलायित:। साऽहं विना तेन नील-नलिन-नयनेन किं करोमि, किं पश्यामि, किं शृणोमि, क्व गच्छामि, कुत्र तिष्ठामीति किमपि न जाने, केवलमहर्निशं तद्विरहानल-दह्यमान-हृदया उन्मत्तवत् पर्य्यटामीति। राजमाता तु निशम्य तस्या: सर्वं शोक-पूर्ण-मुदन्तं दृष्ट्वा च तामश्रु-विलुलिताक्षीमतीवदीनावस्थां परां करुणा मुपपेदे, उक्तवती च अयि कल्याणिनि! दुहितरीव त्वयि मे मानसं नितरामेव स्निह्यति, न जाने किमत्र कारणम्—तद्वसाऽस्मिन् मत्पुरे निर्भीकहृदया; मृगयिष्यन्ति ते भर्त्तारं ममैव पुरुषा:।

कदाचित् सोऽपि परितो धावन् स्वयमेवाऽत्राऽऽगच्छेत्; अतोऽत्रैव वसन्ती निःसंशयं पतिमुपलप्स्यसे, एतन्मे मनसि समुत्पद्यते—जहीहि शोकं—अत्रैव वसेति। सा तु तदाकर्ण्य सविनयमुवाच अयि महाभागे! महानऽनुग्रहोऽयं मयि भवत्या प्रदर्शितः, परमहं समयेन केनचित् वस्तुं शक्नुयाम्—अहमुच्छिष्टं न भोक्ष्ये—पादान् न धावयिष्ये, अन्यांश्च पुरुषान्नाभाषिष्ये। यदि कश्चिदितरः प्रार्थयेन्मां पुरुषः, स त्वया कठिनतरं दण्डनीयः। भर्त्तुरुदन्तज्ञानार्थं केवलमहं समये समये ब्राह्मणानऽवलोकयिष्ये, इत्येष मे समयः, यमनतिक्रम्यैवाऽहमत्र वस्तुं शक्नुयाम्—अन्यथा विसृज मां, यामि यत्र मां नयने नयत इति। राजमाता तु निशम्य तस्याः परमपातिव्रत्य-सूचकान् नियमान् अतीव प्रहृष्टेन चेतसा तां प्रत्युवाच—भद्रे! सर्वमेव ते समयमहं पालयिष्यामि, मा भैषीः, आगच्छ मया सहेति तामादाय स्व-दुहितृ-समीपं गत्वा तामुवाच सुनन्दे! सुर-सुतोपमा मयैषा सैरिन्ध्री समासादिता—इयन्तु रूप-गुणोपेता वयसा च समाना तवैव सखी भवतु—नाचरेः कदाचिदप्यस्यां किमप्यऽन्याय्यरूपमिति। सुनन्दा

तु प्राप्य तां सर्वाकारहृदयङ्गमां सहचरीं परमाह्ला-
दिता स्वगृहमुपगम्य सर्वासु सखीषु तां न्यवेदयत्।
दमयन्त्यऽपि तत्र रूपेण विनयेन शीलेन च सर्वासां
प्राण-भूता सर्वाभिः परिपूजिता च सन्तोषित-
सुनन्दा-मानसा निरुद्वेगा नल-चिन्ता-परायणा
न्यवसत्।

## सप्तमोऽध्यायः।



नलस्तु निषधराजः उत्सृज्य तां निद्रा-विकला-
मर्द्ध-वसनां वनान्ते वैदर्भीं पर्य्यटन्नितस्ततः शो-
कान्ध-मानसः क्वचिदेकत्र वनराजीर्दहन्तं प्रचण्डं
दावानलं ददर्श, शुश्राव च तन्मध्यवर्त्तिनः कस्या-
ऽपि भूतस्य "भो भोः पुण्यश्लोक महीपते नल!
सत्वरं सत्वरं—अभिधाव—त्रायस्व मां महतो
भयात्" इत्यसकृदुच्चरन्तमुच्चैरार्त्तनादम्। श्रुत्वैव
"न भेतव्यम्—न भेतव्यम्—अयमहमागतोऽस्मि"
इत्यभिधाय त्वरितपदं गत्वा वह्नेरभ्यन्तरं,
अपश्यदेकत्र कुण्डलीकृतं शयानं कमपि भु-

जङ्गमम्। स तु वेपमानः कृताञ्जलिरभाषत राजन्! विद्धि मां नागं कर्कोटकं नाम। मया हि क्रूरबुद्धिना देवर्षौ नारदे खल्वपराद्धम्। स तु मन्यु-परीतो मामभिशप्तवान् "तिष्ठ रे दुरात्मन्! स्थावर इव, यावत् कश्चित् नलो नाम भूमिपतिः इतस्त्वाम् स्थानान्तरं नयतीति" अहन्तु तस्य देवर्षेः शापात् पदात् पदमपि चलितुं न शक्नोमि; अतो रक्ष मां राजन्! करुणया, श्रेय स्त्वाहमुपदेक्ष्यामि, सखा च ते भविष्यामि, नास्ति जगति कोऽपि मत्समः पन्नगः; अतो मया सुहृदा कदाचिदपि तवार्थः कोऽपि सम्पत्स्यते। तिष्ठतु तावत् तादृशालापः; अहमिदानीं लघुर्भवामि—सत्वरमादाय मामपसर" इत्यभिधायैव स नागपतिरङ्गुष्ठ-मात्रको बभूव। नलोऽपि तमादाय दाव-शून्यं देशं प्रायात्। अथ तत्र तं त्यक्तुकामं कर्कोटकः पुनरब्रवीत्—राजन्! स्वान्येव कानिचित् पदानि गणयन् गच्छ, तत्रैवाऽहं ते श्रेयो विधास्यामि। सोऽपि तद्वचनात् संख्यातुमारब्धवान्; व्यतीतएवच दशमे पदे कर्कोटकस्तमदशत्, दष्टस्य च तस्य स्वाभाविकं रूपं सहसैवाऽन्तरदधात्। अथ स विकृत-रूपो विस्मय-विकल-

नेत्र: स्तब्ध इव तस्थौ, ददर्श च पुरोवर्त्तिनं स्वरूप-धारिणं नागम् । अथ तं विस्मितं राजानं कर्कोटक: सान्त्वयन्नब्रवीत् महीपते ! मा भैषीर्विकृत-रूप-दर्शनेन, मया ते स्वरूपमेवमन्तर्धापितं यथा त्वां स्वरूपतो न कोऽपि भत्यभिजानीयात्। यत् कृते च त्वमदु:खार्होऽपि ईदृशेन दु:खेनाऽभिपरीत:, यो हि त्वामनागसमपि केवलमसूयया दारुणामिमां यन्त्रणामनुभावयति, स खलु दुरात्मा मद्विष-दग्ध-गात्रो नियतमेवाऽतीव क्लेशमनुभवन् त्वयि निवत्स्यति । किम्बहुना यावदेवाऽसौ त्वां न मोक्ष्यति, तावदेवाऽस्य विष-ज्वालाऽपि नाऽपगमिष्यति ; तव तु मनुष्येन्द्र ! मत्प्रसादात् नमानवेभ्य: न श्वापदेभ्य: नाऽपि केभ्यश्चिदपरेभ्यो भूतेभ्यो भयं भविता ; प्राप्स्यसि च त्वं रणमुखे राजेन्द्र ! शश्वदेव विजयम् ।

अधुना त्वं प्रख्यापयन्नाऽऽत्मानं सूतं बाहुकं नाम, गच्छाऽयोध्याया ऋतुपर्णस्य राज्ञ: समीपम् । स चेक्ष्वाकु-कुल-प्रदीप: परमेव प्रावीण्यमुपगतवानऽक्षक्रीड़ासु । सहवास-सम्पर्कात् स ते परं मित्रं भविष्यति, दास्यति च तुभ्य मक्ष-हृदयज्ञानं, समादाय तत्सकाशादश्व-हृदय-विद्याम् ।

यदा तु त्वमक्ष-हृदय-ज्ञो भविष्यसि तदैव श्रेयसा, दारैः, तनयाभ्यां, राज्येन च योक्ष्यसे, एतत्ते सत्यं ब्रवीमि। यदा तु राजन्! स्वकीयं रूपमवलोकयितुमिच्छेः तदैवाऽहं त्वया स्मर्त्तव्यः, इदञ्च वासोयुगं परिधातव्यम्, अनेन हि वाससा च्छन्नो नियतमेव स्वं रूपं प्रतिपत्स्यसे, इत्यभिधायैव स नागराजः प्रदाय तस्मै दिव्यं वासो-युगलं उपदिश्य च बहूनि श्रेयांसि सत्वरमन्तरदधात्।

अन्तर्हिते तु तस्मिन् नागाधिपतौ प्रययौ स राजा निषधेश्वरः ऋतुपर्णस्य राज्ञो नगरं प्राप्तवांश्च तद् दशमे दिवसे। अथ स राजानमास्थानगतमुपलभ्य विनयावनतो वक्तुमुपक्रान्तवान्— राजन्! नास्ति मत्सदृशः कोऽपि पृथिव्यामश्वसारथ्य-कर्म्मणि; राजनीतौनामपि किञ्चिदभिज्ञोऽस्मि; अन्नादिकमतीव सुरसं पक्तुमहं जानामि। यानि चापराणि शिल्पानि सन्ति, यद्वाऽतीव दुष्करं पृथिव्यां विद्यते, तत् सर्वमेवाहं कर्त्तुं यतिष्ये; अतो यद्यर्थी मया भृत्येन, भरस्व मां भूपते! नाम्ना बाहुकमिति। ऋतुपर्णस्तु समाकर्ण्य तद्वचनं दृष्ट्वा च तस्य सर्वगुणाश्रंसि शरीरं अतीवप्रीतो निजगाद, भद्र! बाहुक! स्वच्छन्दं

सर्वे एव गुणास्तवाऽस्यामाकल्यामेव; विशेषतः शीघ्रयाने सदैव मे मानसं रमते, अतो यतस्व मे वाहान् मनोजवान् कर्त्तुम्, ददामि तुभ्यमहमश्वाध्यक्षतां बहुशतेन वेतनेन; इमौ च पुरतो दृश्यमानौ वार्ष्णेय-जीवलौ सदैव त्वामुपचरिष्यतः; एताभ्यां सार्द्धं यथासुखं निवसेति।

अथैवमुक्तो दासत्व-प्राप्तावपि परम-संहृष्टः पुण्यश्लोकस्ताभ्यां सह तत्रैव राजभवने न्यवसत्, वैदर्भी-चिन्ता-जर्ज्जरित-हृदयस्तु प्रतिदिनमेव सन्ध्या-समये श्लोकमिममुदगायत्—

"क्व नु सा क्षुत्पिपासार्त्ता श्रान्ता शेते तपस्विनी।
स्मरन्ती तस्य मन्दस्य कं वा साऽद्योपतिष्ठति ! ॥"

ततो नित्यमेव ब्रुवन्तमेवं एकदा जीवलो निशायां पृष्टवान् सखे बाहुक! का सा नारी? कस्य वा पत्नी? यां नित्यमेव त्वं एवमनुशोचसि? यदि न दोषः कथनेन पूरय मे कौतूहलमिति। स त्वेवं भूयोभूयः पृष्टः प्रत्युक्तवान्—सखे! किमहं ब्रवीमि! सा खल्वासीत् कस्याऽपि मन्दमतेः, पता-केव पतिव्रतानां प्राणेभ्योऽपि प्रियतरा पत्नी। स खलु नष्टभाग्यः केनाऽपि कारणेन तया विप्रयुक्तः शोकानलदह्यमानमानसो भ्रमित्वा बहून् देशान्

अनुभूय च दारुणमाधिं, वसति क्वचिदपीदानीं समासाद्य किञ्चन सर्वथाऽनर्हं, गायति च प्रति-दिनं निशागमे श्लोकमिमं, संस्मरन् तां विनि-न्दितेन्दुवदनां हृदयाधिकाम्। सा तु साध्वी कान्तारेऽप्यनुगता, परित्यक्ता च तेन पापमतिना किमिदानीमपि जीवति? अहो! एकाकिनी, मार्गाणामनभिज्ञा, सुखोचिता, सुकुमारी, क्षुधा पिपासया च परिश्लथाङ्गी किमधुनाऽपि प्राणिति? हा धिक्! मानुष-समागम-शून्ये सिंह-शार्दूल-सेविते दारुणे गहने परित्यक्ता पाषाण-हृदयेन किमद्यापि प्राणान् धारयति? इत्येवमात्मवृत्ता-न्तमविस्पष्टमश्रुजलाविलाक्षः समये समये जीवलाय निवेदयन् दमयन्ती-चिन्तयैव दिवानिशं यापयन् इच्छन्नपि प्राणां स्त्यक्तुमपारयन् पुण्यश्लोको नलो निषधेश्वरो बहूनि दिनानि यावत् तस्यैव राज्ञ ऋतुपर्णस्य नगर्यामज्ञातवासं न्यवसत्।

समाप्तोऽयं पूर्वभागः।

